॥ श्रीः ॥

द्वितीयो भागः

श्रीमदानन्दतीर्थभगवत्पादाचार्यकृतसूत्रभाष्यादि
ग्रन्थेषूदाहृतानि

# ब्रह्मतर्कवाक्यानि

मुद्रकः
मेजिस्टिक् प्रेस्, उडुपि, द. कन्नड.

## संकेताक्षरसूचना

| | | |
|---|---|---|
| बृ. भा· | = | बृहदारण्यकोपनिषद्भाष्यम् |
| वि· त· नि | = | श्रीमद्विष्णुतत्वविनिर्णयः |
| छां. भा. | = | छांदोग्योपनिषद्भाष्यम् |
| मां. भा. | = | मांडूकोपनिषद्भाष्यम् |
| भा. ता. | = | श्रीमद्भागवततात्पर्यनिर्णयः |
| सू. भा. | = | ब्रह्मसूत्रभाष्यम् |
| अनु. | = | श्रीमद्ब्रह्मसूत्रानुव्याख्यानम् |
| न्या· वि. | = | श्रीमन्न्यायविवरणम् |
| ईशा भा. | = | ईशावास्योपनिषद्भाष्यम् |
| क. नि | = | कर्मनिर्णयः |
| गीता. ता. | = | श्रीमद्भगवद्गीतातात्पर्यनिर्णयः |
| तत्व-दी. | = | तत्वप्रदीपिका |

॥ श्रीः ॥

## पीठिका

प्राप्तकालमिदमावेद्यते यत् श्रीमत्पूज्यपादाः **श्रीमन्मध्वे**ति सुगृहीत-नामधेयाः अस्मदाचार्यवर्याः बळित्थेत्यादिसूक्तप्रतिपाद्यमहामहिमानः वाय्ववतार त्वेन प्रथिताः ब्रह्मसूत्रभाष्याद्यनेकस्वीयग्रन्थरत्नेषु स्वकीयमसदृशमभिनवसिद्धान्तं प्रकट्यकार्षुरिति नाविदितमिदं विदुषाम् । अयं च सिद्धान्तः अभिनवतमत्वेन प्रमितोऽपि न स्वकपोलकल्पित इति प्रथनायातिप्राचीनानि बहुप्रमाणजातानि । तत्रापि श्रीमद्व्यासकृतवाक्यान्येव स्वकृतग्रन्थेषु तत्र तत्र संमतित्वेनोदाहृत्य स्वसि-द्धान्तस्य प्राचीनत्वं स्वगुरुश्रीमद्वेदव्याससंमतत्वं च छात्राणां बोधया-मासुः । तत्र बहुभिः पण्डितप्रकाण्डैः तर्कशास्त्रत्वेन परिगृहीतस्य लोक-सिद्धतर्कशास्त्रस्य तत्र तत्रासामञ्जस्यं सयुक्तिकं प्रदर्श्य वेदाङ्गभूतं तर्कशास्त्रं नाम ब्रह्मतर्काख्यः ग्रन्थ एवेति जिज्ञापयिषया स्वीयबहुषु ग्रन्थेषु तान्येवापूर्वाणि ब्रह्मतर्कवाक्यानि संगृह्य तस्यैव च वेदाङ्गत्वं तर्कशास्त्रत्वं च स्वग्रन्थेषु समर्थ्य न च ब्रह्मतर्कः प्रमाणनिरूपणार्थमेव प्रवृत्त इति च निरूप्याक्षपादादिरचित-तर्कशास्त्रं प्रमाणभूततर्कशास्त्रं नेति तत्रत्यदोषप्रदर्शनपूर्वकं तस्य तर्कशास्त्रत्वप्र-सिद्धिभ्रममूलिकेति च विशदय्य सज्जनानन्वगृह्णन् ।

इममेवाभिप्रायं श्रीमत्पद्मनाभतीर्थाः जयेतिप्रथिताः श्रीमट्टीकाकृत्पादा अपि न्यरूरुपन् ।

अथापि पृथक् मन्दानां भ्रमनिरसनाय लोकप्रसिद्धकुतर्कशास्त्रेषु विद्यमानान् दोषान् प्रदर्श्य ब्रह्मतर्कानुसारिप्रमाणनिरूपणानि स्वकृतप्रमाणलक्षणाख्यग्रन्थरत्ने स्फुटतरं निरूपितानि ।

तदिदं स्थालीपुलाकन्यायेन प्रदर्श्यते । ब्रह्मतर्कप्रमाणरीत्या प्रत्यक्षानुमाना-गमेतित्रीण्येव प्रमाणानि । नैयायिकोक्तरीत्या तु चत्वारि प्रमाणानीति । युक्तिदोषाः षडेवेत्यस्मदाचार्यैराघोषि । नैयायिकैस्तु एकविंशतिसंख्याकाः युक्तिदोषा इति । अमीषां गुणदोषादिकं स्वीये प्रमाणलक्षणादौ ब्रह्मतर्कप्रमाणानुसारेण समर्थ्य सम्यगबोधयन्निति नैतन्निवेदनीयं विदितवेद्यानां ।

ब्रह्मतर्काख्यं शास्त्रं तु न केवलं प्रमाणनिरूपणार्थमेव प्रवृत्तं । किं तु पदार्थान् तत्वानि च निर्देष्टुं प्रवृत्तमिति पूर्वोक्तौ प्रदर्शितब्रह्मतर्कप्रमाणद्रष्ट्टणां विशदमिति न पृथक् निवेदनीयं ।

अयं च ब्रह्मतर्काख्यः ग्रन्थःसर्वज्ञैःश्रीमद्वेदव्यासैःरचितत्वात्तद्रचितश्रीमन्महाभारतांतर्गतभगवद्गीतादिवत्परमप्रमाणमिति च वेदितव्यं भवति । अत्राधिको विचारः 'तर्ककेसरी, न्यायवेदान्तवाचस्पतिः, महाविद्वान्' इत्यादि बिरुदसमलंकृतैः श्रीमद्द्वैतवेदान्तमहापाठशालान्यायवेदान्तप्राध्यापकैः पण्डितप्रकाण्डैः श्रीमद्भिः प. नारायणाचार्यैः कृतायां पूर्वोक्तौ, तथा, सि· आर. कृष्णराव्, रिटायर्ड् सेशन्जड्ज् इत्येतैर्महाशयैर्विरचितांग्लभाषामये प्रथमभागे च विशदं दृश्यते इति नात्र मदीयां लेखनीं व्यापारयामि ।

इति विद्वद्विधेयः

**अग्रहार नारायण तन्त्री,**

वेदान्तशिरोमणिः, वेदान्तविद्वान्.

# पूर्वोक्तिः

**श्रीलक्ष्मवक्षसे रूक्षनखशिक्षितरक्षसे ।**
**स्वपक्षरक्षादीक्षाय नृहर्यक्षाय ते नमः ॥**
**त्रिधामा यस्य हृत्सीम्नि कृतधामा निरन्तरम् ।**
**सुधीश्रियं दिशतु मे स मध्वक्षीरसागरः ॥**
**परं देवं वासुदेवं गोपीजनमनःप्रियम् ।**
**जननीं सर्वजगतां रमां मङ्गलदेवताम् ॥**
**पवनं श्रीमदाचार्यमाचार्याणीं च भारतीं ।**
**नमाम्यहं दयावन्तो दिशन्तु मम सद्धियम् ॥**
**हयग्रीवेति यो वक्ति तस्य गङ्गेव पावनी ।**
**आस्यान्निस्सरते वाणीत्येवं यो वक्ति मे गुरुः ॥**
**सर्वदा तां गुरोर्वाणीं स्मरन्तो वयमञ्जसा ।**
**तं देवं तं गुरुं वापि विनाऽन्यं कं भजामहे ॥**

**अ**यि वाचकमहाशयाः विषयमिमं पात्रीकुरुत नेत्रयोः, अथवा श्रोत्रयोः । यत् सर्वज्ञकल्पानाचार्यवर्यान् विना इयत्कालपर्यन्तं परब्रह्मेव बहुभिरदृष्टं ब्रह्मतर्केति शोभनवर्णानलंकुर्वन्तं ग्रन्थमुद्दिश्य लेखनीं व्यापारयितुमुद्युक्ता वयं हास्यपदवीं यास्यामोवेति चिरं विमृशन्तोऽपि न वयं तत्वमत्र निर्णेतुं प्रभवामः । यद्यप्यस्याः पूर्वोक्तिरिति प्रमिताया अपि अपूर्वोक्तिः लेखनीयतया विवक्षितेन सर्वथा साम्यमस्ति । यत इयमस्मदीयोक्तिरप्यपूर्वा, लेखनीयविषयोऽप्यपूर्वः अयं ब्रह्मतर्केति ग्रन्थोऽप्यपूर्वः । सतिचैवं किमत्र लेखनीयं । प्रतिपाद्यं विषयं वा, प्रतिपादकं ग्रन्थं वा, अदृष्ट्वा किं तन्महिमा वर्णयितुं शक्येत केनचित् । विषयः विचारयितुं शक्तः स्याद्वा, तत्रत्यान् भागविशेषान् निरूपयितुं वा किं कश्चित् शक्नुयात् । एवं विमर्शे ईदृशेऽप्यर्थे अपूर्वां पूर्वोक्तिं रिरचयिषोरस्य धाष्टर्यं किं वक्तव्यं । ईदृशेप्यर्थे प्रवृत्तं जनाः किं न निन्देयुः । अत एवादितः शङ्का हास्यपदवीं यास्यामो वेति । अथापि कौतुकात्किमपि किमपि वदामः । न हि क्षीरोत्सेचनं आज्ञया वा प्रार्थनया वा निरोद्धुं शक्यते । अतो युक्तमयुक्तं वा वदन्तो वयं केवलं दूष्याः न भवेम इति निश्चिनुमः ।

"बहुरत्ना वसुंधरे"ति च प्रतीतिः । ईदृश्यामस्यां पृथिव्यां "परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः" इति प्राज्ञोक्तेः सत्वात् चातकवत् ईदृशानेव सज्जनान् मनसि संदधानाः वयं प्रवर्तामहे । आस्तां तावत् । कलिहतके अस्मिन् समये पूर्वेषां वचोऽश्रद्दधानैः जनैः कूपमण्डूकन्यायेन निरर्गलतया स्वज्ञानमात्रमुग्धैरेवमाघुष्यते । यत् स्वेन विदितमेव जगति विद्यमानं वस्तु नाम । यस्मात्स्वशिरोगतपित्तेन स्वस्य सार्वज्ञमेव भाति तेषां, नत्वन्यत् । हन्ताहन्ता लोकानां । यद्यप्ययं विषयः श्रीमता अश्वत्थामाचार्येणाप्युदघोषि । यदस्मदुक्तं । तथाहि महाभारते सौप्तिकपर्वणि तृतीये अध्याये "सर्वो हि मन्यते लोकः आत्मानं बुद्धिमत्तरं" । xxxx तुष्यन्ति च पृथक् सर्वे प्रज्ञया ते स्वया स्वया । परबुद्धिं च निन्दन्ति स्वां प्रशंशन्ति चासकृत्" इति । स्वाविदितं तु मिथ्यैव । अस्य प्रकृतमेवोदाहरणम् । तथापि दोषकलुषितबुद्धिना प्रसंगविशेषे श्रीमता अश्वत्थामाचार्येणोक्तमित्येतावतैव लोकाः इदंयुक्तमिति नानुमन्येयुः । सत्येवं ब्रह्मतर्काख्यं ग्रन्थरत्नं सर्वज्ञकल्पैर्बहुशः उदाहृतमपि स्वस्यादर्शनमात्रेण स ग्रन्थ एव नास्तीति वा अप्रमाणमिति वा वक्तुं न जिहेति लोकः । यः कश्चिदनृतवाद्यपि एकवारं द्विवारं वा कदाचिदनृतं ब्रूयात् । तादृगपि न सर्वत्र सर्वदा ॥ अतः कोऽपि पुमान् स्वस्मिन् जनानामनाश्वासशङ्कया बहुवारं नानृतं वदेत् । सत्यामीदृश्यां लोकमर्यादायां प्रायः स्वीयप्रतिग्रन्थं न केवलमेतावत् , किंतु बहुवारं प्रदर्शितानि प्रमाणानि स्वेनादृष्टत्वात् स्वमतविरुद्धत्वात् प्रतिप्रमाणदर्शनासामर्थ्याच्च तानि प्रमाणान्येव न संतीति वा नप्रमाणानीति वा अज्ञहतकोऽयं जनः वक्तुमुत्सहते इति किमाश्चर्यमतः परम् । महिमाऽयं कलेरित्येव निश्चप्रचं वदामो वयं । एतावत्पर्यन्तं लोकमर्यादामनुसृत्याभिहितं । वस्तुतस्तु सर्वज्ञकल्पास्मदाचार्यकालेऽपि प्रदर्शितस्य ब्रह्मतर्कग्रन्थस्य अन्यस्य वा स्वकपोलकल्पितत्वेनाप्रामाण्यं वा अदृष्टत्वमात्रेणासत्वं वा, केऽपि नोदघोषयन्निति वयमनुमिनुमः । यतो हि आकन्याकुमारीतः आबदरिकाश्रमं सकलान् देशान् बहुप्रयासेन चारं चारं तत्र तत्रत्य विद्वन्मन्डलीषु निगूढानि ग्रन्थरत्नानि मर्शं मर्शं संगृह्य तदानींतनानां विदुषां सभासु तत्तद्विषयविचारणासमये तांस्तान् ग्रन्थान् प्रदर्श्यैव वाग्बन्धः आचार्यैरकारीति सप्रतिज्ञं सबहुमानं सश्रद्धं च वयं वदामः । यत्तदात्वे श्रीमदाचार्यैः स्वप्रतिपाद्ये विषये प्रमाणत्वेन स स ग्रन्थः तत्तेषां प्रादर्शीति अयं ग्रन्थ एव नास्तीति वा न प्रमाणमिति वा तदानींतनाः विद्वांसः वक्तुं नाशकन् । अतएव सर्वज्ञा आचार्याः स्वाभाविकप्रतिभाबलेन ब्रह्मतर्कादिग्रन्थान् तद्ग्रन्थविषयांश्च आजन्म जानन्तोपीतरेषां मनस्समाधानायैव बहुदेशसंचारादिकं कृत्वा विवक्षितान् तांस्तान् ग्रन्थान् तत्रतत्रनिगूढानपि अन्विष्य संगृह्य च ततः परमेव तत्तत्प्रसङ्गेषु प्रसक्तानां विषयाणां समर्थनाय तांस्तान् ग्रन्थानेव प्रदर्शयामासुः । न तु स्वेन ज्ञातमित्येवावोचन् । ते च ग्रन्थाः आचार्याणां तत्तद्देशगमन काले दक्षैः च्छात्रैः नीताः इति च प्रथा अस्ति । अतएव सुमध्वविजये सर्गे १३ श्लोके १४ "सकमण्डलुमण्डलावलम्बं स्वयमेवालघुपुस्तकादिभारं । युवशिष्यगणो दधे न यत्नान्नहि दाक्ष्यस्य समो गुणो परोऽस्ति" इति । एवमाचार्यकाले प्रदर्श्यमानस्य प्रमाणजातस्य मूलकोशसनाथत्वेन सभास्वप्रामाण्य शङ्काऽकलङ्कितत्वेनेदानींतनबलवत्तरमतान्तरवासनावासितान्तःकरणत्वेन आधुनिकानामेवेदृशी शङ्का । अतएवोक्तं तत्त्वनिर्णये श्रीमद्भिः टीकाकारैः "यो हि यत्र अनादरवान् अन्यत्रादरवांश्च तस्य तत्रविद्यमानमपि वस्तु न स्फुरती"ति । अत्र विद्यमानं = स्फुट प्रतीयमानं, तदेतन्नस्फुरति तदुपपादकं न स्फुरतीति किमुवक्तव्यं इति कैमुत्यद्योतकं अपिपदमिति तदीयव्याख्यायां ।



ननु तर्हि आचार्यकाले प्रचारवन्तः ते सर्वेपि ग्रन्थाः इदानीं क्व गताः परम्परागतमूलमठेष्वपि क्वचिदपि कश्चिदपि नोपलभ्यते कुतः इति स्वयूथ्यानां वादस्तु संप्रदायानभिज्ञत्वात् भ्रान्तिमूल इति निश्चप्रचं प्रतिजानीमः । यतो हि इयं वदन्ती अस्मद्देशे अस्मदीयेषु प्रमितेषु संप्रदायाभिज्ञेषु जनेषु प्रथिताऽस्ति । यत् कट्टतिलनामके दक्षिणकर्णाटकान्तर्गते क्षेत्रे इदानीं सर्वैर्दृश्यमाने अणुसरसि अपूर्वतया संगृहीतानीमानि पुस्तकानि सर्वात्मना नाशं गतानि माभूवन्निति जागरूकतया शासनप्रायाणि कृत्वाऽधःस्थापितानि । तदुपरि बृहती एका शिला च निक्षिप्ता । अतएवोक्तं संप्रदायपद्धतौ, श्लोक १९. "ततो दयावारिनिधिः ग्रामे सेतुतिलाह्वये । स्वशास्त्रग्रन्थमकरोत् भूगतं पूर्णशेमुषिः"इति ।

तस्याणुसरसः अद्य यावत् प्रत्यहं पूजा प्रचलति, न केवलमेतावत्, किंतु यस्याः कस्याश्चित् रजःस्वलायाः वा अस्पृश्यजातेर्वा समीपसंपर्के तत्क्षण एव सर्पागमनं, पूजाप्रतिबन्धश्च भवति, सरसः शुद्धीकरणानन्तरमेव पूजादिकं सर्वं प्रचलति । इदं च आविपालगोपालाङ्गनं प्रथितमस्ति तत्रत्यानां । यतो हि ते अशुचयो जनाः सर्पादिभिया तत्सरः दूरत एव त्यजन्तीति सर्वानुभव सिद्धत्वान्नात्राधिकं लेखनीयमस्ति । एतेन दुराग्रहग्रस्तः श्रीमदाचार्योदाहृतानामपूर्वग्रन्थानां स्वमतविरुद्धानां प्रत्युत्तरणानर्हाणां निराकरणासामर्थ्यात् श्रीमान् अपेयदीक्षितः स्वकृते मध्वतन्त्रमुखमर्दनाख्ये ग्रन्थे अपूर्वग्रन्थानां नामनिर्देशाय प्रवृत्तः चतुर कमठ माठरेत्यादि नामानि संगृह्य इमानि सर्वाणि काप्यसत्वात्, केनाप्यदृष्टत्वात् न प्रमाणानि इति स्वपाण्डित्यमाविश्चकार । यद्यप्यत्र विषये पण्डितप्रकाण्डैः श्रीमद्विजयीन्द्र वनमालामिश्रादिभिः समर्पकं तदीयग्रन्थं निराकुर्वद्भिः १. अभिनवगदा, २. अपेयकपोलचपेटिका, ३. मध्वाध्वकंटकोद्धारः, ४. अद्वैतकालानलः, ५. मध्वमुखालङ्कारः इत्यादिभिः ग्रन्थरत्नैः पराक्रान्तम् । नास्माकमत्र वक्तव्यमस्ति । इदमेकमुदाहरामः "चूतस्य नापराधोस्ति ह्युष्ट्रो दूराद्यदुज्झति । सौभाग्यं नैव निम्बस्य यदादत्तेऽनुरागतः । इदमेवोत्तरं तस्य मन्दबुद्धेः सुरद्विषः । विष्णुद्वेषात्ब्रुवाणस्य ह्युत्तरं नास्ति चापरं ।" इत्यलं प्रसक्त्यानुप्रसक्त्या ।

एवमस्मत्पूर्वैरेव निराकृतेऽस्मिन्विषये खण्डनमण्डनाय न प्रवृत्ता अपिवयं । "विवक्षितं ह्यनुक्तमनुतापं जनयति" इति कविसमयमनुरुध्य "अणुरपि विशेषः अध्यवसायकरः" इति न्यायं चानुसृत्य किञ्चिद्वदामः । यत् सुधादिग्रन्थेषु अनुव्याख्याने च इति चतुरश्रुतिः इत्यस्मदीयामुक्तिं चोरयित्वा संप्रदायानभिज्ञत्वात् अनधिगतशास्त्रोपदेशत्वात् श्रीमदाचार्यैरेव क्वचित् चकारं विना तुरश्रुतिः इत्युक्तस्यानवलोकनाच्च तुरश्रुतेः चतुरश्रुतिरिति भ्रान्त्या नाम विज्ञाय तां श्रुतिं चतुरेत्येव व्यवाहार्षीत् । एवं पदभेदानभिज्ञः तदर्थदूषणाय प्रवृत्तः कथं वा दूषयेत् किंवा ब्रूयादिति न वयं जानीमः । स्थालीपुलाकन्यायेन अयमेकोदोषः प्रकटितः । इत्यलं अप्रसक्तानुप्रसक्त्या ।



एतावता शास्त्राविरुद्धा पद्धतिः प्रदर्शिता । एवमपि ये बुद्धिदौर्बल्यात् भ्रष्टतर्कस्य किं बहुना सामान्यतः इतरादृष्टानां सर्वेषामस्मदाचार्योदाहृतानां प्रमाणानां प्रामाण्ये सन्दिहते । अथ च निर्मत्सरतया तत्त्वं जिज्ञासते च । तान् प्रतीदमुच्यते । दुराग्रहं परित्यज्य पक्षपातं चाकृत्वा विचारयन्त्विति शिरसा तान् प्रार्थयामः । एवं सन्दिहानानां कोवाऽऽशय इति न वयं जानीमः । अतः विकल्प्योत्तरयितुं प्रयतामहे । तथाहि प्रायशः इतरादृष्टानामस्मदाचार्योदाहृतानां ग्रन्थानां को दोषः? अस्मदाचार्योदाहृतत्वमात्रं दोषो वा इतरादृष्टत्वमात्रं दोषो वा मिलितं उभयं वा । आद्ये भवदाचार्योदाहृतानामपि प्रमाणानां देवानां प्रियेण त्वया कथं प्रामाण्यमङ्गीक्रियते । ऋषित्वादेव तेषां सर्वज्ञकल्पत्वं तत्कृतानां प्रामाण्यं च सेत्स्यतीति चेत् । अहो महान् व्यामोहस्ते । न हि ऋषित्वं जातिः । त्रिकालदर्शित्वस्यैव तत्त्वात् । कल्पाध्यायी ऋषिरिति तन्निर्वचनाच्च । त्रिकालदर्शित्वमर्वाचीनेषु न सम्भवतीति चेत् अयमपरो व्यामोहः । कालत्रयवृत्तान्तदर्शिनां साङ्गसकलवेदाध्यायिनां भट्टपादप्रभृतीनां बहुलमुपलम्भात् । कथमन्यथा भवन्मूलपुरुषाणां शङ्कराचार्यादिनां सर्वज्ञत्वादिकमङ्गीकुरुषे । महाग्रन्थप्रणयनादिसकलासाध्यविलक्षणकार्यकारित्वात्सर्वज्ञत्वादिकमङ्गीकुर्म इति चेत् किं प्रकृतेष्वीदमितरेषां दण्डवारितं । ननु अस्मदीयग्रन्थप्रवृत्तेः तत्त्वज्ञानमूलत्वं भवदीयग्रन्थप्रवृत्तेरज्ञानमूलत्वं च निश्चित्यैवं वदामः । इति चेत् युक्तमिदं भाषणं तव त्वादृशस्य वा । अन्यथा अस्मदीयशास्त्रप्रवृत्तेरज्ञानमूलकत्वं कथमवधारितं लोकोत्तरप्रज्ञेन भवता । यतो हि "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि कलौ ब्राह्मणरूपिणा" ॥ इति पाद्मवचनेन प्रमितं त्वच्छास्त्रस्यैव प्रच्छन्नबौद्धत्वं तत एव भ्रान्तिमूलत्वं च कुतो नावैषि । न वा प्रकटयसि । सत्येवमस्मच्छास्त्रस्यैवाज्ञानमूलत्वं वक्तुं कुतो भवान् न जिह्रेति । द्वितीये प्रायशः इतरादृष्टानां प्राज्ञेन केनचिदेव दृष्टत्वेन प्रमितानां प्रमाणानां न तावदितरादृष्टत्वमात्रं दोषः । तस्य दोषत्वेन काप्यगणनात् तथात्वे बहुविप्लवापत्तेश्च । तथाहि अन्यैरदृष्टा अपि केनचिदेव दृष्टा अपि प्रमाणतया अङ्गीकर्तव्या भवन्ति । अन्यथा अन्यैरदृष्टानां आपस्तम्बादिभिरेव दृष्टतया प्रमितानां खिलवाक्यानां तैरेवोदाहृतानां

प्रामाण्याङ्गीकारस्यायुक्तत्वप्रसङ्गात् । इदं तु तुष्यतु दुर्जनः इति न्यायेन कथनं । परमार्थतस्तु अन्यैरदृष्टत्वमेव नाङ्गीकुर्मः । बहुभिः सर्वज्ञकल्पैर्महर्षिभिरस्मदाद्यदृष्टानामप्यस्मदाचार्योदाहृतानां वाक्यानां तैर्दृष्टत्वस्यैव न्याय्यत्वात् । तर्हि तानि प्रमाणानीतरे क्वापि कुतो नोदाहरिष्यन् । इति तु मन्दस्य शङ्कामात्रं । न हि यद्यद्दृश्यते तदुदाहरणीयमिति श्राद्धनियमः राजाज्ञा वा अस्ति। तेषामौदासीन्याद्वा प्रकृतानुपयोगाद्वा दृष्टानामप्यनुदाहरणसम्भवात् । न चेत्पूर्वमीमांसायां "ऊर्जं पशूनाप्नोति ऊर्जोवरुध्यै" इत्यादि खिलश्रुतयः उदाहृताः । शाङ्करीये भाष्ये "ॐ अत एव चोपमा सूर्यकादिवत्" इति सूत्रे "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादि खिलश्रुतिः । सम्भृत्यधिकरणेऽपि 'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति राणायनीयखिलश्रुतिरेवोदाहृता । रामानुजीयभाष्येपि "ॐ ज्योतिश्चरणाभिधानात्" इत्यधिकरणे "इन्द्रः शचीपतिर्बलेन पीडितो दुश्च्यवनो वृषा समुत्ससार हि" इति खिला चतुष्पदा गायत्र्युदाहृता । एवं श्रीकण्ठभाष्येपि "यश्चण्डालः शिव इति वाचं वदेत् तेन सह संवसेत् । तेन सह संवदेत् तेन सह भुञ्जीत" इत्यादिखिलश्रुतिरेव उदाहृता । नहि तास्सर्वैर्दृष्टाः । तासां का गतिरिति केनचित्पृष्टः किमङ्ग ब्रूयाः । अतो यत्किंचिदेतत् ।

अतः सर्वैरदृष्टत्वं न मानानां दूषणं । नापि दोषाधायकं । अत एव न तृतीयोऽपि । प्रत्येकं द्वयोरुक्तरीत्या दोषत्वाभावे तयोर्मेलनमात्रेण दोषत्वस्य निर्बीजत्वात्। अपि च इदं दोषयोर्मेलनमेव न । प्रत्येकं दोषत्वाभावस्य समर्थितत्वात् । प्रत्युत अलङ्कारिकाणां समयरीत्यापि दोषयोर्मेलनमपि गुणएव । यतः "दोषावितः क्वचन मेलनतो गुणत्वं वक्तुर्गुणोहि वचसि भ्रमविप्रलंभौ" इतिकुवलयानन्दे । अस्यापि प्रकृते सम्बन्धो नास्ति। प्रत्येकं द्वयोर्दोषत्वाभावात् । दोषयोर्मेलनेपि गुणत्वस्यैव अङ्गीकारात् इति। आस्तां प्रकृतानुपयुक्तेन भाषणेन । अतएवोदाहृतानां प्रमाणानामसत्त्वशङ्कापि गर्भश्रावेणैव गता । सर्वज्ञकल्पैः कैश्चिद्दृष्टत्वादेव । इतः परमेकाशङ्कोर्वरिता । यत् स्वोक्तविषयसमर्थनार्थं स्वकपोलकल्पितानीमानि प्रमाणानीति । सातु अतिहास्यास्पदेति वयं प्रतिजानीमः । यतो हि अनाप्तत्वशङ्कामूलिकेयं शङ्का । यद्यस्मदीयश्रीमदाचार्येषु आप्तत्वं निश्चितं कुर्मः । तर्हि सा शङ्का गर्भश्रावेणैव गच्छेदिति श्रीमदाचार्याणामाप्तत्वनिश्चयाय कानिचित्प्रमाणान्युदाहरिष्यामः ।



श्रीमदाचार्याणां वाय्ववतारत्वे इमानि पुराणवाक्यानि प्रमाणानि ।

ब्रह्मपुराणे क्षेत्रकाण्डे वेङ्कटगिरिमाहात्म्ये तृतीयेऽध्याये शङ्खलिखित संवादे—

त्वं चापि गच्छ शैलेन्द्रं पूर्वं स्वर्णमुखीतटे ।
यत्र ब्रह्मशिला नाम सरिन्मध्ये च वर्तते ॥
अगस्त्यतपसा पश्चाद्वयासान्निध्यमत्र वै
पादा ईशानविष्ण्वादिदेवानां तत्र सन्ति हि ॥
यतिरूपो मातरिश्वाऽष्टाविंशतितमे कलौ ।
अवतीर्य वसत्यत्र मध्वनामा वरं विभोः ॥
अवाप तपसा पुण्यः प्रीत्या चागस्त्ययोगिनः ।
तत्स्थापितालये पुण्ये चातुर्मास्यं करिष्यति ॥
शुकः श्रोष्यति सच्छास्त्रं पद्मतीर्थादिहागतः ॥ इति ॥

तथा स्कान्दपुराणे श्रीमुष्णमाहात्म्ये नवमे अध्याये

कलौ पाषण्डभूयिष्ठे धर्मलेशविवर्जिते ॥
वैवस्वतेऽन्तरे प्राप्ते त्वष्टाविंशे कलौ युगे ।

इत्यारभ्य

तदा सम्प्रार्थितो देवैर्भगवान्हरिरीश्वरः ॥
तत्कर्मदक्षं विनतं मातरिश्वानमादिशत् ।
वायुस्तु यतिरूपेण जनिष्यति कलौ युगे ।
स दशप्रमतिर्भूत्वा कलौ धर्मान्वदिष्यति ।
कृत्वा सच्छास्त्रसन्दर्भं स्थापयिष्यति सत्पथम् ॥
एवमेव महादेवि नारायणपरायणाः ।
काले काले भविष्यन्ति तत्र तत्र महाव्रताः ॥

इत्यादि ॥-

तथा कूर्मपुराणे श्रीमुष्णमाहात्म्ये पञ्चमेऽध्याये श्रीसूत उवाच

पुरा भागीरथीतीरे जिमिना पृष्टवान् मुनिः ।
नष्टा भागवता धर्माः सच्छास्त्राणि कलौ युगे ।
इति श्रुतं मया पूर्वं तीर्थयात्राप्रसङ्गतः ।
कथं नष्टा भविष्यन्ति पुनः स्थास्यन्ति वै कथम् ।
वद विद्वन्महाबाहो कश्चोद्धारं करिष्यति ।

×××××××××

**एवं धर्मेषु नष्टेषु शास्त्रेषु च कलौ युगे।**
**देवैर्विज्ञापितो विष्णुर्वायुमाज्ञापयिष्यति।**
**उद्धरस्व महाबाहो मम धर्मान्सनातनान्।**
**इत्याज्ञप्तो भगवता कलौ वायुर्भविष्यति।**
**मध्वनामा यतिरसौ सच्छास्त्राणि करिष्यति।**
**गीतायाश्चोपनिषदां भाष्याणि च करिष्यति।**
**निरसिष्यति पाषण्डान्सच्छास्त्राणि महामतिः।**
**स्थापयिष्यति सद्धर्मान्सच्छास्त्रं व्याकरिष्यति।**
**श्रोष्यन्ति मुनयः सर्वे शुकाद्या देवरूपिणः** ॥ इति ॥

एवं बहुपुराणप्रमितत्वेनानाप्तत्वशङ्कायाः दूरोत्सारितत्वात्। सर्वमिदं मनसि निधाय सर्वज्ञकल्पाः अस्मदाचार्याः शिष्यानुजिघृक्षया स्वावतारस्य "बळित्थेत्यादि श्रुतिमूलत्वमचकथन्।" अनेन "एका क्रिया द्व्यर्थकरी" इति न्यायेन श्रीमदाचार्याणामाप्तत्वनिश्चयेन असत्वेनाप्रामाणिकत्वेन च सह पर परिकल्पितममीषां प्रमाणानां स्वकपोलकल्पितत्वं च निरस्तमिति। स्वयमज्ञः परानज्ञान् मन्यते, स्वयं दुष्टा नारी परा अपि दुष्टाः इति जानीते। इति न्यायेन "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते। मयैव कथितं देवि कलौ ब्राह्मणरूपिणा" इति पाद्मवचनेन च अस्मदुदाहृतं प्रमाणवचनैश्च प्रमितं स्वच्छास्त्रस्यासच्छास्त्रत्वमवलोक्य असत्प्रमाणेन भवता इतरशास्त्राण्यप्यप्रमाणानि, तदुदाहृतवाक्यानि स्वकपोलकल्पितानि इति दूयता हृदयेनाघोषितमित्येव निश्चेयं भवति।

एवं बह्वन्युदाहरणानि श्रीमदाचार्यवाक्यप्रामाण्यरक्षार्थं श्रीमदाचार्यानुग्रहेणैवोदाहर्तुं प्रभवामः। न केवलमिदं प्रतिज्ञामात्रं तत्रैकमुदाहरणं प्रदर्श्यमानमाकलयन्तु सहृदयाः इति। तथाहि "शिष्टाचारात् स्मृतिःकल्प्या स्मृतेश्च श्रुति कल्पना" इति धर्मशास्त्रविदः। सत्यामप्येवं वस्तुस्थितौ अस्मत् दृष्टिपथमागतानां सर्वासां स्मृतीनां मूलभूताः श्रुतयःकिमस्माभिः मन्दमतिभिः दृश्यन्तेवा। न दृश्यन्ते चेत् मूलभूतश्रुत्यभावात्ताः स्मृतयः अप्रमाणानीति वक्तुं शक्नुमोवा इत्यत्र का गतिः। मूलभूताः श्रुतयः न सन्तिचेत् आगता स्मृतीनां दुरवस्था अप्रामाण्यरूपा। सन्तिचेत् कुतो न दृश्यन्ते अतो न सन्त्येवेति ताः श्रुतयः इति तन्मूलकत्वेन



स्मृतिवक्तारः वञ्चका इति ते अनाप्ता इति वा वक्तुं शक्यते वा। भवन्त एव विचारयन्तु। तत्रेयमेव गतिः 'यद्वै किञ्चन मनुरवदत्तद्भेषजं' इति श्रुतिपरिगृहीतत्वेन मनोराप्तत्वनिश्चयात्तज्जातीयत्वेन स्मृतिकर्तृत्वेन विरुद्धश्रुत्यदर्शने इतरेषामप्याप्ततां स्मृतिकाराणां निश्चित्य तैः श्रुतयः दृष्टाः स्युरिति मूलभूतानां श्रुतीनां सत्त्वं निर्धार्य स्मृतीनां प्रामाण्यमभ्युपगम्यते इति सार्वजनीनं। संप्रदायपरंपरया अविच्छेदेनाधीयमानासु श्रुतिषु अस्माभिरदृष्टत्वमात्रेण तासामसत्त्वं वा तेषां विप्रलम्भकत्वं वा नकैश्चिदभ्युपगम्यते। तत्र श्रुतीनां खिलाखिलभेदेन द्वैविध्यस्य शास्त्रकारैः प्रदर्शितत्वात्। नकेवलमेतावदेव। वेदस्य बहुशाखारूपेण विभक्तत्वादस्माकं च बुद्धिदौर्बल्येन सर्वशाखानामध्येतृत्वाभावादेकैकशाखाध्ययनस्यापि समग्रसामर्थ्याभावादस्मदनधीतेषु बहुषु वेदभागेषु क्वचित्स्थिताः श्रुतयः स्मृतिमूलभूतास्सर्वज्ञकल्पैः ऋषिभिः दृष्टा इति मनस्समाधाय तूष्णीमास्यते। ननु किमपि किमपि यद्वातद्वा सन्दिह्यते। इयं हि आप्ततया प्रमितानां महाज्ञानिनां वचसां प्रामाण्ये सर्वैरङ्गीक्रियमाणा लोकमर्यादा। एवं मात्सर्यमुत्सार्य श्रीमदाचार्यप्रदर्शितानां वचसां प्रामाण्येऽपि विचारचतुरा दृष्टिर्निक्षिप्यते। तदा ब्रह्मतर्कस्य तदितरासां श्रुतीनां स्मृतीनां च प्रामाण्यविषये शङ्कापिशाची न समास्कन्दति। यथा ऋषयः सर्वज्ञकल्पाः "यद्वै किञ्चन" इत्यादि श्रुत्यनुगृहीतत्वादिति पूर्वमेवावेदि। तद्वदेव शिष्यानुजिघृक्षया स्वेनोदाहृतब्रह्मतर्कादिवाक्यानामप्रामाण्यशङ्कानुदयाय स्वस्य बळित्थेत्यादि श्रुत्यनुगृहीतत्वेन परमाप्ततां निश्चित्य समादधते सज्जना इति छात्रान् प्रत्याचार्यैः 'बळित्थे'त्यादि सूक्तार्थवर्णनमकारि। न केवलमेतावत् श्रीमदाचार्याणां परमाप्ततमत्वं भाविसमीरेति प्रमितश्रीमद्वादिराजपूज्यचरणविरचितयुक्तिमल्लिकादिग्रन्थेषु युक्तिमल्लिकायां 'षष्ठे अष्टमे अन्तिमाध्यायद्वयमारभ्य सप्तमे। पवमानः पूयमानः सोमश्चोक्तः पदे पदे। स मध्व इति तत्रैव पवमानस्य मध्वता। यत् स्पष्टं श्रूयते तस्मान्मध्वाख्या मारुती तनुः। इत्याद्यारभ्य——अतः पूर्णप्रज्ञ एव दशप्रमतिनामवान्"। इत्यन्तं शतद्वयपरिमिताभिः कारिकाभिः पूयमानपवमानसूक्तादीनां वायुमध्वपरत्वेनैव व्याख्यानादपि श्रीमदाचार्याणां वाय्ववतारत्वं सिध्यति। उक्तिगौरवभिया नेह तन्यते। युक्तिमल्लिकात एवावगन्तव्यमिति सहृदयान् प्रार्थये। इत्यलं॥

**ह्यानवद्यविद्योऽयं श्रीमान् मध्वाभिधो गुरुः**
**कृतिमेनां मम हृदि कारयामास संस्थितः ।**
**इतः परं पुरोक्तानां प्रमाणानां विशेषतः ।**
**विषयाणां प्रभेदेन नवधा भेद ईर्यते ॥**

तथाहि ।

अयं च ब्रह्मतर्काख्यो ग्रन्थः "ब्रह्मतर्कं च भगवान् स एव कृतवान् प्रभुः । पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥ उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः ।" इत्युक्तरीत्या सर्वज्ञाभ्यां साक्षाद्भगवतो नारायणस्य मूर्तिभ्यां कृतत्वेनाप्रामाण्यशङ्काऽकलङ्कित इति निश्चप्रचं । परं तु श्रीमदस्मदाचार्योक्तेः प्रामाण्यायास्माभिरियान् प्रयत्नः कृत इति सुधीभिर्विभावनीयं ॥

तत्र आचार्योपदर्शितप्रमाणमार्गे एवं विषयविभागः अधस्तात्प्रदर्शित-क्रमानुसारेण बुद्धिसौकर्याय संगृह्यते । तत्र एक एव विषयः प्रसङ्गात् ब्रह्मतर्क-प्रमाणैः यत्र यत्र निर्दिष्टः तावन्तं सर्वमपि विषयं संगृह्य तावद्ग्रन्थनामनिर्देश-पूर्वकं एको भाग इति अत्र विभक्तः ।

### तत्र प्रथमभागे

#### विषयस्तु प्रत्यक्षादि प्रमाणम्

१) तत्र आदौ विजिगीषुकथात्वेन प्राप्तकथास्वरूपं प्रपञ्चयितुं बृहदारण्यकभाष्ये कथास्वरूपतत्प्रभेदतदधिकारितत्फलनिर्णायकसभ्यलक्षणादिकं सम्यक् निरूपितम् । तत्प्रसङ्गागतमन्यच्च ।

२) वादकथादौ प्रश्नोत्तरदातृपुरुषलक्षणादि ।

३) प्रत्यक्षानुमानागमप्रमाणस्वरूपादिलक्षणादिकथनम् ।

४) प्रमाणत्रयं निरूप्य इतरेषामत्रान्तर्भावपूर्वकं तत्स्वरूपकथनं ।

५) तत्र प्रत्यक्षस्य प्राबल्यनिरूपणम् ।

एवमयं विषयः बृहदारण्यके स्थलत्रये तत्वनिर्णये छान्दोग्येच एकैकत्र । एवं स्वग्रन्थत्रये पञ्चवारमाचार्यैः निरूपितः ।

॥ श्रीः ॥

# उपलब्धो ब्रह्मतर्कः

विषयस्तु प्रत्यक्षादिप्रमाणम् ।

वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा ।
केवलं तत्वविज्ञानमुद्दिश्य गुरुशिष्ययोः ॥
अन्ययोर्वा बहूनां वा निर्दुष्टमनसां कथा ।
वाद इत्युच्यते सद्भिः जयस्तत्रार्थिको भवेत् ॥
विजये शिष्यताऽन्येषां पूजा च जयिनः सदा ।
पुनश्च संशयो यत्स्यात् तेषां तस्यापि वारणम् ॥
कर्तव्यं जयिना नित्यमशक्तस्य स्वतोऽधिकात् ।
अन्योन्यनिर्णयश्चेत्स्यात्तदा सब्रह्मचारिणः ॥
पृष्टेन प्रथमं मानं वक्तव्यं वादिना शुभम् ।
वेदाः सर्वे शुभं मानं सेतिहासपुराणकाः ॥
सपञ्चरात्रमीमांसाः स्मृतयश्चाप्यनन्तरम् ।
तदन्यदशुभं प्रोक्तं न प्रयोज्यं कथासु च ॥
मिश्रमक्षानुमानेतु ग्राह्यं शब्दार्थनिर्णये ।
अदुष्टमिन्द्रियं त्वक्षमुपपत्तिस्तथाऽनुमा ॥
अनुमैव त्वभावाख्यो ह्यर्थापत्त्युपमे तथा ।
उपपत्तिभेदा यत्तेपि वाक्यमेवागमः शुभम् ॥
तत्वनिर्णयवैलोम्यं संवादो वा विरोधितै ।
पराजय इति प्रोक्तः समः सर्वकथासुच ॥
तत्वनिर्णयवैलोम्ये दण्ड्यो वादकथास्वपि ।
गुरुणैव त्ववश्यानां राजा दण्डं प्रयोजयेत् ॥
गुरुदण्डस्तु वाचा स्याद्राजदण्डोऽर्थदेहतः ।
गुरुदण्डोऽप्यर्थतः स्यात्संवादे व्रततोऽपिच ॥
राजदण्डो बलाच्च स्यात् दोषस्य गुरुलाघवात् ।
संवादे दंड्यता नास्ति जल्पादौ च कथंचन ॥
तत्वविप्लवकर्तारं संसत्सुच पराजितम् ।
छित्वा जिह्वां च काकाङ्कं राजा राज्याद्विवासयेत् ॥
अन्यसाम्यप्रभेदोवा नीचता वा कुतश्चन ।

विष्णोः श्रीपूर्वकाणां च व्यत्यासो गुणदोषतः ॥
तद्भक्तेरन्यधर्मत्वं पंचैते तत्वविप्लवाः ।
तत्वविप्लावकं शूद्रं वैश्यं क्षत्रियमेववा ॥
हन्यादेवाविचारेण विप्रजिह्वां तथोद्धरेत् ।
स्वसिद्धान्ते प्रमाणं च परसिद्धान्तदूषणम् ॥
वक्तव्यमुभयं वादे जल्पे चेति सतां मतम् ।
अवाक्यंयदूषणं तर्कादागमादेव साधनम् ॥
वाक्यतात्पर्यविज्ञप्त्यै मानमन्यत्तचान्यथा ।
सतोरेव यदा स्पर्धा गुणतोऽर्थार्थमेव वा ॥
तदा जल्पः समुद्दिष्टः तत्र विद्यां परीक्षयेत् ।
विद्या परीक्षापूर्वाहि सत्कथा जल्प उच्यते ॥
सर्वज्ञाः वैष्णवाः पञ्च सप्त वोभयसंमताः ।
अधिका वा यथा लब्धाः प्राश्निकास्तु परीक्षकाः ॥
उभयोः प्रश्नकर्तृत्वात्प्राश्निकाः इति कीर्तिताः ।
तदभावे गुणोद्रेकं दर्शयेतां पृथग्जने ॥
विद्यासाम्ये कथा कार्या ह्यन्यथैकपराजयः ।
विद्योनो दण्ड्य एव स्याद्यदि नोच्चस्य शिष्यताम् ॥
व्रजेत्पश्चाद्यथावाद एवं जल्पः प्रकीर्तितः ।
अर्थनिर्णयहेतुत्वाद्वादे प्रश्नो जयेऽपितु ॥
न जल्पेतु पुनः प्रश्नः सभ्यानुज्ञां विना भवेत् ।
स्पर्धा सतां वितण्डा स्यात्तत्वविप्लावकैर्यदा ॥
मूलपक्षग्रहापेता वितण्डा कविभिर्मता ।
सतामेव वितण्डा स्यादसतां जल्प एवतु ॥
एवं जल्पो वितण्डेति ह्युभयोः सहिता कथा ।
अप्रकाश्यः स्वपक्षो हि पाषण्डानां यतस्ततः ॥
अग्रहेणैव पक्षस्य तर्कागमबलेन तु ।
दूषयेदेव पाषण्डान् तत्वविप्लावकान् सदा ॥
तत्पक्षाणां निषेध्यत्त्वात्तेषां पक्षग्रहो भवेत् ।
विष्णुभक्त्यन्यधर्माख्यः तत्वविप्लव एवतु ॥
बौद्धादीनां यतः सर्वे तत्वविप्लावकास्तथा ।
सर्वनास्तिकवादी वा स्वमनीषामतोऽपिवा ॥
तस्यापि पक्षं संस्तृत्य दूषयेद्वाक्ययुक्तितः ।
यस्य नैवागमो मानं तं ब्रूयादागमाश्रयः ॥
धर्मार्थोऽथ वृथैवायं तव पक्षस्य संग्रहः ।



धर्मार्थश्चेन्न धर्मो हि शक्यो द्रष्टुं विनाऽऽगमात् ॥
यथाऽनुमीयते हिंसा पापहेतुस्तथैव हि ।
धर्महेतुत्वमप्यस्याः अनुमातुं सुशक्यते ॥
वृथा पक्षं वृथा हन्याद्यदि कश्चित्किमुत्तरम् ।
इत्यशक्तौ सतां सर्वैं संभूयापि निवारणम् ॥
कुर्युरेवासतां सन्तः तत्वविप्लाविनां जये ।
येषां विष्णोः समं किंचिदधिकं वा नतु क्वचित् ॥
क्षराक्षराभ्यां भिन्नं च विष्णुं पश्यन्ति ये सदा ।
तारतम्यविदः सर्वजीवानां प्रकृतेरपि ॥
भगवद्धर्मिणो नित्यं ते सन्तः परिकीर्तिताः ।
पराजितेष्वसत्सूक्तं राजा दण्डं प्रपातयेत् ॥
जितेषु सत्स्वसद्भिस्तु राजोदासीनतां व्रजेत् ।
यावदेषां विजेता स्यादथ दण्डं निपातयेत् ॥

इत्यादि ब्रह्मतर्कै— बृ. भा–४०–२

2 प्रश्नो वादे च जल्पादौ कर्तव्यः प्रतिवादिना ।
तदुक्तिमात्रे प्रामाण्यं यदि नास्त्यागमान्तरम् ॥
अपेक्षितं यदा शङ्का दर्शनीयस्तदाऽऽगमः ।
निःशंकत्वेन यो वक्ता प्रश्नानामुत्तरं सदा ॥
आनुकूल्येनागमानां नाशंक्यं तद्वचः क्वचित् ।
दशतालो दशमुखो ललाटत्रिंशकस्तथा ॥
सार्धोन्नतश्चैव पुनः पर्यग्दशशिरास्तथा ।
पञ्चोराः सप्तपादो यो नाशंक्यं तद्वचः क्वचित् ॥
नवांगुलमुखो यस्तु गले च चतुरंगुलः ।
चतुर्विंशांगुलतनुः तद्वाक्यं देवपूजितम् ॥
प्राधान्याल्लक्षणोपेतो दुर्लक्षणयुतोपि सन् ।
तस्यापि वाक्यं मानं स्यात्किसु सर्वयुतस्य तु ॥
प्रायो देवाश्च ऋषयो न सर्वशुभलक्षणाः ।
ऋते विष्णुं सुरश्रेष्ठं ब्रह्माणं वाप्यनन्तरम् ॥
यस्माच्च विदुषां वाक्यमाशंक्यं केनचित्क्वचित् ।
तस्माद्वेदेषु सर्वेषु कथाः प्रश्नोत्तरात्मिकाः ॥
न प्रमाणान्तरं तत्र पृच्छन्ति घटनां विना ।
एतस्मादाश्वलाद्याश्च पप्रच्छुर्नैव कुत्रचित् ॥

आगमं याज्ञवल्क्योक्तेरन्यं तं मिथिलोऽपि च ।
इति ब्रह्मतर्के— बृ. भा–४४–२०

3 अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा ॥
आगमोऽदुष्टवाक्यं च स्वदृक्चानुभवः स्मृतः ।
बलवत्प्रमाणतश्चैव ज्ञेयाः दोषाः न चान्यथा ॥
द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः ।
तयोः स्वभावो बलवानुपजीव्यादिकश्च सः ॥
याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयोः ।
ज्ञानं च द्विविधं बाह्यं तथाऽनुभवरूपकम् ॥
बल्येवानुभवस्तत्र निर्दोषं त्वक्षजादिकम् ।
अनुप्रमाणतां याति तथाऽक्षादि त्रयं ततः ॥
प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।
उपजीव्यविरोधेतु न प्रामाण्यमसुष्य च ॥
यामाहुरनुमां केचित्त्रियाद्यवयवात्मिकाम् ।
सा व्यर्था नोपपत्यादि विना साऽपि प्रमाणताम् ॥
यात्यतो युक्तिरेवैका प्रमाणमनुमात्मकम् ।
युक्तिः प्रतिज्ञारूपा च हेतुदृष्टान्तरूपिका ॥
तथोपनयरूपा च परा निगमनात्मिका ।
पृथक् पृथक् प्रमाणत्वं याति युक्तितयैव तु ॥
प्रतिज्ञा हेतुगर्भैव पृथक् प्रामाण्यमेष्यति ।
सिद्धत्वेन प्रतिज्ञायाः हेतुर्मानं पृथक् भवेत् ॥
प्रतिज्ञावयवत्वात्तु स्वातन्त्र्येणैव मानताम् ।
दृष्टान्तो यात्युपनयो व्याप्तिमाश्रित्य केवलम् ॥
व्याप्तिस्तु केवलाऽपि स्यात्प्रमाणं नियमाश्रयात् ।
तथा निगमनं चोपसंहारैकस्वरूपतः ॥
प्रामाण्यं यात्यनुभवो ज्ञापयत्युपपत्तिताम् ।
विरोधश्च तथाऽऽधिक्यं न्यूनताऽसंगतिस्तथा ॥
उपपत्तिदोषा विज्ञेयाः विरोधश्च स्वतोऽन्यतः ।
जनकस्यात्ययो जातिः स्वस्यवाऽन्यस्य वा भवेत् ॥
जनकं प्रमाणमुद्दिष्टं स्वस्यार्थस्य प्रकाशनात् ।
निग्रहा एत एव स्युः संवादानुक्तिसंयुताः ॥
अर्थतः प्राप्तिरेवार्थापत्तिरित्यभिधीयते ।
दृष्ट्वा सदृशमेवान्यं पूर्वदृष्टेतु वस्तुनि ॥



एतत्सदृशताज्ञानमुपमानं प्रकीर्तितम् ।
अभावस्य परिज्ञानं द्विविधं समुदाहृतम् ॥
एकं तत्रानुभवतो योग्यस्यानुपलब्धितः ।
द्वितीयमपि विज्ञेयं सुखाद्ये च घटादिके ॥
एकं प्रत्यक्षरूपं स्याद्द्वितीयमनुमात्मकं ।
कचिद्घटाद्यभावोऽपि प्रत्यक्षेणावगम्यते ॥
झटित्येव परिज्ञानाच्च लिङ्गोद्भवता मता ।
अर्थापत्तिश्चोपमाच ह्यनुमाभेद एव तु ॥
आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च ।
प्रत्यक्षं त्रिविधं ज्ञेयमैश्वरं यौगिकं तथा ॥
अयौगिकं चेति तथा सर्वमक्षात्मकं मतम् ।
अक्षाणि च स्वरूपाणि नित्यज्ञानात्मकानि च ॥
विष्णोः श्रियस्तथवोक्तान्यन्येषां द्विविधानि तु ।
स्वरूपाणि च भिन्नानि भिन्नानि त्रिविधानि च ॥
दैवासुराणि मध्यानीत्येतत्प्रत्यक्षमीरितम् ।
विषयान्प्रतिस्थितं ह्यक्षं प्रत्यक्षमिति कीर्तितम् ॥
अक्षयं पुरुषस्याक्षं स्वरूपे मुख्यमेवतु ।
उपचारस्तदन्यत्र सृष्टावुपचयो यतः ॥
उपपत्तिस्वरूपत्वादनुमा संभवादिकम् ।
प्रत्यक्षागममाहात्म्यादनुमानं प्रमाणताम् ॥
याति नैवान्यथा तस्य नियतत्वं कचिद्भवेत् ।

इत्यादि ब्रह्मतर्के— वि.त.नि.३–१८.तत्वप्रदीपिका–पु १२

4 प्रत्यक्षमनुमानं च वाक्यं चेति त्रिधा प्रमा ॥
उपमा यंप्रमाणं यदेतेष्वन्तर्गतं हि तत् ।
निर्दोषेंद्रियसंयोगः प्रत्यक्षमिति गीयते ॥
निर्दोषयुक्तिरनुमा तादृशोक्तिस्तथाऽऽगमः ।
मानं चैव विशेषेण निर्दोषज्ञानसाधनम् ॥
अर्थापत्तिश्चोपमा च संभवाद्यनुमैव तु ।
दुःखाद्यभावः प्रत्यक्षं बाह्यगश्चानुमा स्मृता ॥
योग्यस्यानुपलब्ध्याख्या युक्तिरेव हि बाह्यगा ।
मनसः संप्रयोगो यो दुःखादिरहितात्मनः ॥
अभावरूपं प्रत्यक्षं मनश्च द्विविधं मतम् ।

चेतनं च जडं चेति चक्षुराद्यं तथैव च ॥
चेतनं त्विन्द्रियं ह्यात्मस्वरूपान्नापरं स्मृतम् ।
मुक्तानां चेतनं त्वेव बद्धानामुभयं तथा ॥
स्वरूपेणापि संयोगः स्वरूपस्यैव युज्यते ।
यथा रत्नस्य संयोगः तत्प्रकाशेन नित्यदा ॥
रत्नस्य च प्रकाशस्य न भेदः कश्चिदिष्यते ।
विशेषो नाम विज्ञेयो विशेषाद्दृष्टिगोचरः ॥
विष्णोरेव स्वरूपाणां तद्गुणानां तथैव च ।
तस्यैव शिरआदीनां नैव भेदोऽस्ति कश्चन ॥
अभेदेऽपि विशेषेण व्यवहारः पृथग्भवेत् ।
विष्णोर्जडेन जीवैश्च भेद एव श्रिया तथा ॥
विष्णोः क्रियाश्च याः काश्चिदभेदस्तैरपि ध्रुवः ।
कादाचित्कत्वमप्यासां विशेषेणैव युज्यते ॥
एवं विमुक्तजीवानां स्वरूपैः स्वगुणैरपि ।
स्वक्रियाभिस्तथैवैक्यं नित्यं सावयवैरपि ॥
भेदाभेदस्तु बद्धानां गुणैः स्वैः कर्मभिस्तथा ।
अंशांशिनोर्गुणस्यापि गुणिनः कर्मतद्वतोः ॥
कार्योपादानयोश्चैव व्यक्तिसामान्ययोरपि ।
भेदाभेदः समुद्दिष्टो विनाशो यत्र दृश्यते ॥
एकस्मिन् विद्यमानेऽपि तयोरेकस्य कस्यचित् ।
अविनाभावनियमो यत्राभेदस्तु तत्र हि ॥
अभेदश्च स्वभिन्नेन भेदाभेदस्तु तत्र च ।
भेदाभेदो नतु क्वापि विष्णोरस्ति कदाचन ॥
भेद एवतु जीवाद्यैः केवलाभेद आत्मनि ।
स्वरूपेषु विशेषो यः स्वरूपं तस्य सोऽपितु ॥
क्रियाणां च न नाशोस्ति तच्छक्तेः पूर्वकालतः ।
विशेष एवोपरतिः क्रियायाः समुदीरिता ॥
विशेषस्य विशेषोऽन्यो न चैवास्ति कथंचन ।
स्वस्यापि तु विशेषश्च स्वयमेव भविष्यति ॥
यथा जनेर्जनिर्नान्या तस्या वस्तुजनिर्जनिः ।
तथापि तु जनित्वात्सा सत्त्वं वस्तुन आनयेत् ॥
एवमेव विशेषोऽसौ विशेषान्तरवर्जितः ।
करोति न करोतीति विशेषव्यवहारकृत् ॥



व्यक्तिभावं गता या तु करोतीति स्वरूपिणी ।
शक्तिरूपस्थिता सैव क्रियाशक्तिरितीर्यते ॥
सा च व्यक्तिस्तु जनिवत् क्रियाया रूपमेवतु ।
तथापि तु विशेषेण स्वरूपेण विशेषिणी ॥
जनेर्जनिवदेवासौ ज्ञातव्या व्यतिरेकतः ।
एवं मुक्तक्रिया नित्या नान्येषां भ्रान्तिसंभवात् ॥
मुक्तावुच्छेदतश्चैव निःशेषेणाखिलस्य च ।
नैवं मुक्तक्रिया यास्तु तस्याश्च पुनरुद्भवात् ॥
अमुक्तानां क्रियायाश्च मुक्तावपि समास्थिताः ।
अभिन्ना इति ता ज्ञेयाः अभिव्यक्तेः पुनः पुनः ॥
चिन्तनादिक्रियाणां तु मुक्तावुच्छेदतः सदा ।
किं मया कार्यमादीनां भेदाभेद उदीरितः ॥
अचेतनेष्वस्वतन्त्राः क्रिया यस्मात्सदैव तु ।
भेदाभेदस्त्वतो ज्ञेयः सर्वत्र नियमेन तु ॥
ईश्वरः प्रकृतिर्जीवः जडं चेति चतुष्टयम् ।
पदार्थानां समुद्दिष्टं तत्रेशो विष्णुरुच्यते ॥
इत्यादि ब्रह्मतर्के— बृ—भा—१९-३
5 दृष्टस्य सत्यतायान्तु युक्तिर्वाऽयुक्तिरेववा ।
भूषणं तस्य मिथ्यात्वे युक्त्यभावोऽतिदूषणम् ॥
युक्तिश्च दोष एव स्याद्बलवन्मानवर्जिता ।
इति ब्रह्मतर्के— छां—भा—१०४

## द्वितीये भागे

### विषयस्तु श्रीसहितं परंब्रह्म ।

१) अत्र परब्रह्मणः क्रीडयैव भोगः नत्वप्राप्तप्राप्त्यर्थः ।

२) कर्तृशब्दस्य स्वतन्त्रे मुख्यत्वं प्रदर्श्य ब्रह्मपरतादर्शनम् ॥

३) प्राज्ञादिभगवद्रूपाणां विभागाभावेऽप्यादिमत्तादिकथनम् । प्राज्ञादिरूपस्य भगवतः व्यापारविशेषकथनं च ।

४) हरेः परापरोभयशब्दवाच्यत्वेऽपि सामर्थ्यविशेषव्यत्यासाभावकथनं. अवतारस्य पौर्वापर्यात्पूर्वत्वापरत्वसमर्थनं च ।

५) अस्मदादिशब्दैस्सर्वविभक्तिमिश्च ब्रह्मणो वाच्यत्वेऽपि जीवादत्यन्तविभेदकथनं ।

६) सप्रमाणं हरेः श्रमाभावेऽपि शयनवत्त्वेन श्रमशब्दसमर्थनम् ।

७) हरेर्दुःखाभावेऽप्यर्थान्तरकथनेन तापवत्त्वोपपादनम् ।

८) हरेरेव मुख्यान्तर्यामितया पृथिवीशरीरत्वाद्युपपादनम् ।

९) विशेषबलादेकस्य हरेर्बहुत्वोपपादनम् ।

१०) कुत्रचिद्धरेरङ्गत्यागकथने स्वरूपाङ्गत्यागाभावेऽप्यङ्गत्यागोपपादनम् ।

११) स्वरूपगुणैरेव गुणित्वोपपादनम् ।

१२) कादाचित्कत्वेन भासमानेश्वरज्ञानस्य प्रमाणेन कादाचित्कत्वाभावेऽपि तदुपपादनम् ।

१३) सर्वदा परमात्मन एव नियामकत्वसमर्थनम् ।

१४) भागवतमूलस्थात्मतत्वादिशब्दानामन्यथाप्रतीतिनिरासाय परमात्मपरतयाऽर्थवर्णनम् ।

१५) गन्धादिशब्दार्थकथनम् ।

१६) सर्वभोक्तुरप्यैकैकभोक्तृत्वसमर्थनम् ।

१७) सर्वजीवेषु हरेस्समत्वसमर्थनम् ।

१८) हरेस्सर्वेभ्यो भेदेऽपि सर्वरूपत्वोपपादनम् ।

१९) ब्रह्मणोऽन्यस्य स्वातन्त्र्यनिषेधाय ब्रह्मभिन्नज्ञानिनोऽज्ञत्वसमर्थनम् ।

२०) जगद्भेदेऽपि हरेर्यत्तदादिशब्दैरभेदनिरूपणस्य गतिकथनम् ।

२१) सर्वनामरूपादिमतोऽप्यनामत्वादिसमर्थनम् ।

२२) ब्रह्मादिभिरपि हरेरज्ञेयत्वसमर्थनम् ।

२३) भिन्नावयवाद्यभावादवयवशून्यत्वसमर्थनम् ।

२४) हरेर्देहादौ भेददर्शनस्य भ्रान्तित्वम् ।

२५) हरेरन्यस्मात्सृष्ट्याद्यभावोपपादनम् ।

२६) जगद्देहात्सदृशान्तं हरेर्भिन्नत्वसमर्थनम् ।

२७) गुणित्वगुणभोक्तृत्वयोर्हरिस्वरूपत्वकथनत् ।

२८) श्रियः पृथक्सत्वेऽपि बद्धत्वमोचकत्वाभ्यां परापरतत्वप्रदर्शनेऽपि तदुभयाभावात्तस्याः नामादिष्वपाठः नत्वभावादिति निरूपणम् ।



२९) ईशत्वविरोधिनां धर्माणामभावकथनम्, विरुद्धवत्प्रतीयमानानामविरुद्धत्वेन योजनीयत्वं च ।

३०) हरेरेव मोचकत्वकथनम् ।

३१) हरेः ऋतादिशब्दवाच्यत्वकथनं ।

३२) विष्णोस्स्मरणस्वरूपनिरूपणं ।

३३) विभक्तीनां विपरिणामे प्रमाणं प्रदर्श्य ऐक्यपरतया प्रतीयमानानां शब्दानां भेदे सत्यपि विष्णुपरतासमर्थनं ।

३४) विष्णोर्जगन्निर्वोढृत्वसमर्थनं ।

३५) विष्णोस्साम्नायादिशब्दवाच्यत्वसमर्थनं ।

३६) नामाद्युपासायाः ब्रह्मोपासात्वसमर्थनं ।

३७) अत्र मायाशब्दस्याघटितघटनाशक्त्यपरपर्यायस्वरूपेच्छावाचित्व--कथनं ।

३८) स्तुतिशब्देषु केवलभगवत्स्तुतिशब्दं केवलजीवविषयकस्तुतिशब्दं च विना हरिजीवोभयविषयकस्तुतित्वकथनं ।

३९) सर्ववेदेषु ब्रह्मणि वृत्तिद्वयसमर्थनं ।

४०) हरेरेव कालशब्दवाच्यत्वसमर्थनं, तत्सन्निधानात्कालावयवानां तच्छब्द वाच्यत्वं ।

४१) ब्रह्मणोऽविकारेऽपि जगत्सर्जनप्रकारनिरूपणं ।

४२) विष्णोः पृथिव्यादिपादत्वोपपादनं ।

४३) अनवयवस्यापि हरेः श्रुत्यादिमानबलाद्गुणाद्यात्मकत्वकथनं ।

४४) सर्वेशस्यापि सर्वान्तर्यामित्वात्सर्वशब्दवाच्यत्वकथनं ।

४५) हरेः सुखहेतुत्वे कैमुत्यप्रदर्शनम् ।

४६) हरेस्सत्यशब्दवाच्यत्वे निमित्तकथनम् ।

४७) हर्यधीनत्वात्सर्वेषाममुख्यार्थत्वं सर्वशब्दमुख्यार्थत्वं च हरेरेवेति कथनं ।

४८) हरौ ब्रह्मादिशब्दनिर्वचनम् ।

४९) हरेः नामादिप्राणपर्यन्तसत्यादिरूपकथनं ।

५०) हरेः सर्वविध्यतिदूरत्वसमर्थनम् ।

५१) हरेरेव आश्चर्यशब्दकथनम् ।
५२) सर्वमपि हरेः प्रियमितिदर्शनम् ।
५३) हरेः स्वातन्त्र्यात् जीवजडवैलक्षण्येन सत्वादिगुणग्रहणनिरूपणम् ।
५४) हरेरेव त्रिविधानंत्यनिरूपणम् ।
५५) हरेः हयग्रीवादिरूपविशेषेषु शुक्लादिवर्णविशेषकथनम् ।
५६) हरिरमयोः यज्ञइज्यादिशब्दवाच्यत्वसमर्थतम् ।

एवमेकादशग्रन्थेषु षडधिकपंचाशत्स्थलेषु निरूपितोऽयं विषयः । तत्र माण्डूके चतुःस्थलेषु, बृहद्भाष्ये नवसु स्थलेषु, भागवततात्पर्ये अष्टादशसु स्थलेषु, सूत्रभाष्ये पंचसु, अनुव्याख्याने स्थलद्वये, विष्णुतत्वनिर्णय, न्यायविवरणेशवास्य, छान्दोग्य, कर्मनिर्णयेषु एकैकवारं, गीतातात्पर्ये स्थलत्रये, आहत्य षडधिका पंचाशत्स्थलेषु प्रदर्शितः ।

6 पूर्णानन्दस्वरूपस्य क्रीडाभोगो न चान्यथा ।
यथाऽऽदित्यस्य दीपेन न विशेषोऽस्ति कश्चन ॥
इति ब्रह्मतर्के— मां—भा—४-२

7 स्वतन्त्रे कर्तृशब्दःस्यात्प्राज्ञस्यावेदनं यथा ।
सर्वप्रदर्शके चैव तुरीये सर्वदर्शनम् ॥
इति ब्रह्मतर्के— मां—भा—५

8 अधिकत्वाच्च नित्यत्वादध्यक्षरमुदाहृतः ।
येंऽशास्तस्यतु सर्वेऽपि पूर्णाः प्रत्येकशः प्रभोः ॥
अतोऽधिमात्रमुद्दिष्टो मात्रा अंशा उदाहृताः ।
श्रुतः सविष्णुरोंकार ओमित्याक्रियते यतः ॥
आद्यस्तदंशो ह्यातिःस्याद्विषयानापयेद्यतः ।
जीवस्यतु यतः प्राज्ञात्तैजसाद्वा समुत्थितः ॥
अविभागोऽपि भगवानादिमांस्तेन कीर्तितः ।
तस्मादुत्पद्यते मुक्तः सज्ज्ञानानन्दलक्षणः ॥
आप्नोति विषयान्सर्वान्निद्राया विषयस्य च ।
उभयोः कारणत्वेन ह्युभयस्तैजसः स्मृतः ॥
देहाभिमानादुद्धृत्य कर्षति स्वप्नमण्डले ।
उत्कर्षत्वं ततस्तस्य तज्ज्ञाने ज्ञाननित्यताम् ॥



आप्नोति देहादुत्कृष्य स्वात्मनां सर्वमोक्षिणाम् ।
मध्यस्थश्च भवेत्स्नेहाद्दोषाभावाच्च सर्वशः ॥
स्वात्मन्यन्तर्गमयति मानमन्तर्गतिः स्मृता ।
जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद्यतः ॥
प्राज्ञो मानमपीतिश्च तज्ज्ञोऽप्येवं विमुक्तिगः ।
व्याप्त्याऽन्तर्गमयेत्सर्वं दुःखाद्यं च विलापयेत् ॥
अणूनामपि जीवानां प्रकाशो व्यापको भवेत् ।
अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम् ॥
अतोऽन्तर्गमनं मुक्तौ जीवेषु जगतो भवेत् ।
इति ब्रह्मतर्के— मां—भा—६—९

9 परत्वमपरत्वं च विष्णोरेकस्य वै यदा ।
श्रूयते न तु सामर्थ्यभेदस्तत्र कथञ्चन ।
अवतारस्य पूर्वत्वात्पौर्वापर्यमुदाहृतम् ।
इति ब्रह्मतर्के — मां—भा—७—८

10 अस्मच्छब्दगतैर्विष्णुः वाच्यः सप्तविभक्तिभिः ।
सर्वाहेयत्वतस्त्वेकः सर्वस्य प्रतियोगितः ॥
युष्मच्छब्दाभिधेयश्च तच्छब्दैश्च परोक्षतः ।
स एव बहुरूपत्वाब्दहुशब्दाभिधानवान् ॥
जीवे स्थितेन रूपेण द्वन्द्वेनापि द्विधोच्यते ।
भिन्नोऽपि सर्वजीवेभ्यः सर्ववस्तुभ्य एवं च ॥
पूर्णानन्दादिरूपस्य कुतोऽल्पसुखिनैकता ।
इति ब्रह्मतर्के— बृ—भा—२—१५.

11 शक्तिविस्रंसने चापि शयने चापि कीर्तितः ।
श्रमशब्दो हरेर्नैव शक्तिविस्रंसनं क्वचित् ॥
अतो हरेः श्रमो नाम शयनं संप्रकीर्तितम् ।
इति ब्रह्मतर्के— बृ—भा—३—२·

12 तत्र आलोचनायुक्तः तस्मात्कार्यार्थकामता ।
तत्रतातु हरेरुक्ता कुतो दुःखं हरेः प्रभोः ।
इति ब्रह्मतर्के— बृ—भा—३—५.

13 स्यूतं जगदिदं यस्मिन् सूत्रं वायुरसौ स्मृतः ।
तं चापि यमयेद्यस्मादन्तर्यामी हरिः स्मृतः ॥
पृथिव्याद्याः देवतास्तु देहवद्वशात्वतः ।

8 6

शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मनः ॥
अन्तस्थो देवतानां च न विदुर्यं च देवताः ।
प्रविष्टत्वाद्देवतास्थः सोऽन्तरः स्ववशत्वतः ॥
बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः ।
अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम् ॥
जीवानां स्वप्रियत्वं च विष्णुना नियतं यतः ।
तस्य प्रियत्वं नान्येन देवस्य नियतं क्वचित् ॥
स्वतन्त्रः सन्नियन्ताऽसावन्तर्यामी ततः स्मृतः ।
देवतानां स्वभावोऽपि स्वरूपमपि सर्वदा ॥
तदधीनं यतो यामी वासुदेवः प्रकीर्तितः ।
स्वभावसत्तादातृत्वं यन्तृत्वमिति कथ्यते ॥
इति ब्रह्मतर्के— बृ–भा–२९–६.

14 एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः ।
बहुसंख्यागोचरं च विशेषादेव केवलम् ॥
अभावो यत्र भेदस्य प्रमाणावसितो भवेत् ।
विशेषो नाम तत्रैव विशेषव्यवहारवान् ॥
विशेषोऽपि स्वरूपं सः स्वनिर्वाहक एव च ।
द्रव्यात्मना स नित्योऽपि विशेषात्मैव जायते ॥
नित्या एव विशेषाश्च केचिदेवं द्विधैव सः ।
वस्तुस्वरूपमस्त्येवेत्येवमादिष्वभेदिनः ॥
विशेषोऽनुभवादेव ज्ञायते सर्ववस्तुषु ।
न चाविशेषितं किंचिद्वाच्यं लक्ष्यं तथामितम् ॥
विशिष्टस्य स्वतोऽन्यत्वे स्वस्यामेयत्वहेतुतः ।
नैव ज्ञेयं विशिष्टं च मानाभावाच्च नो भवेत् ॥
स्वयमित्यपि हि स्वत्वविशेषेण विवर्जितम् ।
न ज्ञेयं तद्विशेष्यं च तथैवेत्यनवस्थितिः ॥
अभेदेन विरोधोऽस्ति ज्ञाताज्ञातं यतोऽखिलम् ।
तदेव ज्ञातरूपेण ज्ञातमज्ञातमन्यथा ॥
अभिन्नस्य विशिष्टत्वाच्च दोषद्वयमप्युत ।
एकत्वानुभवाच्चैव विशेषानुभवादपि ॥
तज्ज्ञानानुभवाच्चैव न दोषद्वयसंभवः ।
भेदाभेदौच तौ नैव कर्तृभोक्तृविशेषणे ॥
मदन्य इत्यनुभवो यतो नैवास्ति कस्यचित् ।



भेदो विशेषणस्यापि नान्तरस्य कचिद्भवेत् ॥
शुद्धस्वरूपइत्यादावभेदस्यैव दर्शनात् ।
अपृथग्दृष्टिनियमाद्बलज्ञानादिकस्य च ॥
ऐक्यं बाह्यविशेषाणां पृथग्दृष्ट्यैव तत्रतु ।
विशेषहेत्वभावेऽपि द्वैविध्यं कल्प्यते यदि ॥
कल्पनागौरवाद्यास्तु दोषास्तत्रातिसङ्गताः ।
नैकत्वं नापि नानात्वं नियमादस्त्यचेतने॥
भेदाभेदावनुभवादतस्तत्रान्यथागतेः ।
एकोऽहमन्यतोऽन्यश्चेत्येवमेव व्यवस्थितौ ॥
भेदाभेदौ चेतनेषु तस्मान्नैकप्रकारता ।
एकमित्येव यज्ज्ञातं बहुत्वेनैव तत्पुनः ॥
पटाद्यं ज्ञायते यस्माद्भेदाभेदौ कुतो न तत् ।
तन्तुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गतः ॥
अनन्यश्चेत्तन्तुभावे पटाभावः कुतो भवेत् ।
न चात्मनि विशेषोऽत्र दृष्टान्तत्वं गमिष्यति ॥
शुद्धोऽहं प्रत्ययो यस्मात्तत्राभेदप्रदर्शकः ।
अत्रावयवभेदेन स्यादेव ह्यनवस्थितिः॥
न चानवयवं वस्तु कचित्स्यान्मानगोचरं ।
पूर्वापरादिभेदेन यतोंऽशोऽस्यावगम्यते ॥
उपाधिरप्येकदेशसम्बद्धः सन्तमेव हि ॥
ज्ञापयेत्भेदमखिलं ग्रसन्स विभजेत्कथं ॥
तस्माद्गुणादिकमपि नास्त्यनंशतया कचित् ॥
भावाभावव्यवहृतेर्विद्यमानेऽपि वस्तुनि ।
भेदाभेदौ गुणादेश्च जडे वस्तुनि संस्थितौ ॥
चेतने शक्तिरूपेण गुणादेर्भाव इष्यते ।
सुतोऽयं बलवान्विद्यादित्यादि व्यवहारतः ॥
न चैवं शक्तिरूपेण जडे व्यवहृतिः कचित् ।
एकमेवाद्वितीयं तन्नेह नानास्ति किञ्चन ॥
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ॥
एवं धर्मान् पृथक्पश्यान् तानेवानुविधावति ।
इत्यादिश्रुतिमानाच्च परमैश्वर्यतस्तथा ।
सर्वं तु घटते विष्णौ यत्कल्याणगुणात्मकं ॥
इत्यादि ब्रह्मतर्के--गीता–ता–पु–२५–२०

15 यदा त्यागादिरुच्येत पृथिव्याद्यङ्गकल्पना ।
तदा ज्ञेया न हि स्वाङ्गं कदाचिद्विष्णुरुत्सृजेत् ।

इति ब्रह्मतर्के— भा—ता—९—२२.

16 गुणैः स्वरूपभूतैस्तु गुण्यसौ हरिरीश्वरः ।
न विष्णोर्न च मुक्तानां कोपि भिन्नो गुणो मतः ॥

इति ब्रह्मतर्के— भा—ता—११—७.

17 नित्यज्ञानेन सिद्धं च पुनः पुनरवेक्षते ।
लीलयैव हरिर्देवो दुष्टानां मोहनाय च ॥

इति ब्रह्मतर्के— भा—ता—१४—९.

18 समाधावसमाधौ च निःस्वतन्त्रस्य देहिनः ।
अन्यो नियन्ता भगवान् वासुदेवः परः प्रभुः ॥

इति ब्रह्मतर्के— भा—ता—१४—११.

19 अव्यक्ताद्यनहंमानादात्मतत्वं हरिः स्मृतः ।
अशब्दश्चाप्रसिद्धत्वाच्छांतः पूर्णसुखत्वतः ॥

इति ब्रह्मतर्के—भा—ता—१९—१७.

20 हृदि व्यक्तंतु यद्रूपं हरेः गन्धः स उच्यते ।
उत्तमानां तु पादेन सर्वं रूपन्तु भण्यते ॥
गन्धगन्धवतोर्यस्मान्न भेदः क्वचनेष्यते ।

इति ब्रह्मतर्के—भा—ता—२७—५.

21 सर्वं सर्वत्र भोक्ताऽपि विशेषादेकभोक्तृवत् ।
स्थितो हरिरचिन्त्यात्मा निजैश्वर्यादजो विभुः ॥

इति ब्रह्मतर्के— भा—ता—३२—८.

22 स्वभावतः प्रियत्वात्तु सदा देवप्रियो हरिः ।
अप्रियश्चासुराणां स स्वभावात्तूभयं नृणाम् ॥
देशकालौ गुणांश्चैव भक्त्यादीनप्यपेक्ष्यतु ।
योग्यतां च तथा कर्म सम इत्यभिधीयते ॥
स्वतः प्रियोऽपि देवानामुत्पाद्यैव गुणानिमान् ।
इतरेषां तथा दोषान् सुखदुःखे ददात्यजः ॥
उभयं तु मनुष्याणां मतः सम इतीरितः ।
अनादिनियताश्चैव गुणदोषाः सुरादिषु ॥



यथाक्रमं पुनश्चैव नियमाद्वर्धितास्तथा ।
विष्णुनैव ततो नित्यं विषमश्च जनार्दनः ॥

इति ब्रह्मतर्क—भा—ता—६४—१.

23 कर्तृकर्मक्रियादीनां सत्तावृत्तिस्तथैव च ।
विष्ण्वधीनं यतः सर्वं सर्वरूपस्तदुच्यते ॥

इति ब्रह्मतर्के—भा—ता—६९—९.

24 स्वातंत्र्येणान्यसद्भावनिषेधाय श्रुतिस्त्वियम् ।
अन्योऽसावन्योऽहमिति पश्यन्नज्ञ इति स्मह ॥
आत्मानमन्तर्यमयेदिति भेदं स्वरूपतः ।
आह तद्ब्रह्मणोऽधीना भिन्ना जीवास्सदैव तु ॥
स्वरूपसत्ताकर्तृत्वं भोगो मोक्षस्तथैव च ।
मुक्तस्यावस्थितिश्चैव सर्वं विष्णोर्वशे सदा ॥

इति ब्रह्मतर्के—भा—ता—७०—९.

25 उत्पन्नस्यापि यत्सत्ता हरेः तत्स इतीर्यते ।
हरेर्विश्व भिन्नमपि परमोऽसौ यतो विभुः ॥

इति ब्रह्मतर्के—भा—ता—७१—२२.

26 लोकसिद्धार्थनाम्नस्स राहित्यान्नामवर्जितः ।
अरूपोऽप्राकृतत्वाच्च सत्वाभावात्तथाऽगुणः ॥
अकर्माऽक्लिष्टकारित्वान्नित्यत्वादज एव च ।
अलौकिकार्थसन्नाम्नामनन्तत्वाज्जनार्दनः ॥
अनन्तनामा परमः सुसुखज्ञानरूपवान् ।
तानि चास्य सुदिव्यानि सुगन्धीनि सुभान्ति च ॥
शुभलक्षणपूर्णानि सुवर्णानि महान्ति च ।
यदतोऽनन्तरूपोऽसौ पूर्णानन्दादिभोजनात् ।
बलैश्वर्यसुवीर्यादिपूर्णासंख्यगुणत्वतः ।
अनन्तगुण एवासौ ते चाभिन्ना गुणा हरेः ॥
परस्परमभिन्नाश्च सर्वे धर्माश्च तद्गताः ।
अभिन्नानि च रूपाणि सर्वाणि जगदीशितुः ।
प्राकृतस्य तु नामादेरीक्षिता पुरुषोत्तमः ।
अनामादिवचोभिस्तु स एषोऽर्थोऽनुमीयते ॥
अनामत्वादि चान्यच्च ज्ञानिनां मनसेङ्ग्यते ।

तेनैव चोद्य एषोऽर्थस्तस्माज्ज्ञेय इति प्रभुः ॥
इति ब्रह्मतर्के—भा–ता–७४–२०.

27 ब्रह्माद्याः यच्च जानन्ति करणाद्यभिमानिनः ।
जानन्त्यनुग्रहाच्चास्य प्रधानाग्निं यथाऽर्चिषः ॥
अग्निपुत्रा नमस्तस्मै यमाह श्रीश्च न स्फुटम् ।
वेदरूपा परं देवं वैलक्षण्यात्समस्ततः ॥
आनन्दो नेदृशानन्दः इत्युक्तं लोकतः परम् ।
प्रतिभाति न चाभाति यथावद्दर्शनं विना ॥
इति ब्रह्मतर्के—भा–ता–९७–७. तत्व दी. ३–४०

28 अवयव्यवयवानां च गुणानां गुणिनस्तथा
शक्तिशक्तिमतोश्चैव क्रियायास्तद्वतस्तथा ॥
स्वरूपांशांशिनोश्चैव नित्याभेदो जनार्दने ।
जीवस्वरूपेषु तथा तथैव प्रकृतावपि ॥
चिद्रूपायामतोऽनंशा अगुणाऽक्रिया इति ।
हीना अवयवैश्चेति कथ्यन्ते तेऽत्यभेदतः ॥
पृथग्गुणाद्यभावाच्च नित्यत्वादुभयोरपि ।
विष्णोरचिन्त्यशक्तेश्च सर्वं संभवति ध्रुवम् ॥
क्रियादेरपि नित्यत्वं व्यक्त्यव्यक्तिविशेषणम् ।
भावाभावविशेषेण व्यवहारश्च तादृशः ॥
विशेषस्य विशिष्टस्याप्यभेदः तद्वदेव तु ।
सर्वं चाचिन्त्यशक्तित्वाद्युज्यते परमेश्वरे ॥
तच्छक्त्यैव तु जीवेषु चिद्रूपप्रकृतावपि ।
भेदाभेदो तदन्यत्र ह्युभयोरपि दर्शनात् ॥
कार्यकारणयोश्चापि निमित्तं कारणं विना ॥
इति ब्रह्मतर्के—भा–ता–१०२–६. तत्व दी. पु. २२०, २२१.

29 देहभेदेष्ववस्थासु प्रादुर्भावेषु त्रैकलम् ।
ज्ञानानन्दैकसद्रूपं भ्रान्त्या भिन्नं प्रपश्यति ॥
सा च भ्रान्तिर्विनश्येत यदा भ्रान्तित्ववेदनम् ।
अतिक्षिप्रं विनश्येच्च न स्थिरं दिग्भ्रमादिवत् ॥
त्रिगुणैर्वञ्चिताः जीवाः शतिमा जनार्दनम् ।
पश्यन्ति बहुधा स्वप्ने यथैकं बहुधा क्वचित् ॥
अभिन्नोऽपि विभिन्नेषु व्यवहारो यथा भवेत् ।



तथैव व्यवहाराय शक्तत्वान्नैव दूषणम् ।
ईशस्य तु तदन्येषामपि यच्छक्तिदायकः ॥
इति ब्रह्मतर्के—भा–ता–११२–९.

30 अन्यस्मात्सृष्टिसंहारौ स्थितिश्च परमात्मनः ।
निरूपिता न विद्वद्भिः प्रमाणाभावतो हरेः ॥
इति ब्रह्मतर्के— भा–ता–१३३–२.

31 रथोपस्थे परिष्कारात्पूर्वं दारुमयाद्रथात् ।
सुवर्णव्यवहाराय मुख्यं रथपरिष्कृतम् ॥
मध्ये चान्ते रथोपस्थान्निष्क्राम्य पृथगास्थितम् ।
यद्वदेवं हरिः साक्षाज्जगद्देहात्पृथक्स्थितः ॥
पूर्वं जगति संस्थश्च जगदन्ते पृथक्स्थितः ।
स एव मुख्यो जगतः स्वातन्त्र्यात्परमेश्वरः ॥
इति ब्रह्मतर्के—भा–ता–१३३–१५.

32 देशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यता ।
इत्यादिषु स्वसम्बन्धाद्यथैव गुणरूपिणः ॥
गुणित्वं गुणभोक्तृत्वं स्याद्विष्णोस्तच्च स स्वयम् ।
इति ब्रह्मतर्के—वि–त–नि–१८–२१.

33 नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च ।
उभयोरप्यभावेन यथाव्यक्तं न तूदितम् ॥
श्रुतौ तथा जीवपरावुच्येते किं च नेतरत् ।
नोच्यते च तदा तत्वद्वयं वै समुदाहृतम् ॥
इति ब्रह्मतर्के— सू–भा–५६–१०.

34 नायुक्तमीशितुः किंचिदीशत्वस्याविरोधि यत् ।
यदीशत्वविरोधि स्यात्तदेवायुक्तमञ्जसा ॥
ईशत्वस्याविरोधेन योजयित्वाऽखिलाः प्रमाः ।
सिद्धेशत्वेन चायुक्तमपि हीशेन योजयेत् ॥
मानतः प्राप्तमखिलं नामान्तं योजयेत्क्वचित् ।
इति हि ब्रह्मतर्कोक्तिः— अनु–पु–४३–१२.

35 अनादितो गुणाः सन्तो भक्त्याद्या न ह्यमूमुचन् ।
जीवं तद्गुणसुव्यक्तिं कृत्वैनं मोचयेद्धरिः ॥
कश्चिच्च मोचयेद्वासौ स्वातन्त्र्यं तेन तस्य हि ।

भक्तिव्याकरणत्वेन सावकाशेशवागथ ।
भक्त्यैनं मोचयेद्विष्णुरिति मानत्वमेष्यति ॥
इति ब्रह्मतर्कवचनम् — न्या–वि–१३–३.

36 ऋतं तदात्मना ज्ञप्तेः सत्यं साधुत्वतः परम् ।
सम्यक्संस्थमदूष्यत्वाच्छुद्धं दोषोज्झितत्वतः ॥
केवलं तादृशाभावात्प्रत्यगन्तरवस्थितेः ।
एतदेतादृशं तत्वं यो वेद स विमुच्यते ॥
इति ब्रह्मतर्के — भा–ता–१७–१६.

37 भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः ।
अनुग्रहोन्मुखत्वं तु नैवान्यत्कंचिदिष्यते ॥
इति ब्रह्मतर्के — ई–शा–भा–२–३.

38 उषाःशिरो ब्रह्मनामा तत्त्वमस्यादयोऽखिलाः ।
सप्तम्यर्थाः समुद्दिष्टाः पञ्चम्यर्थास्तथा श्रुताः ॥
षष्ठ्यर्थाश्च चतुर्थ्यर्थास्तृतीयार्थाश्च सर्वशः ।
तदैक्यवाचिवच्छब्दा अपि तद्वत्ववाचकाः ॥
ऐक्यार्था नैव ते सर्वे भिन्नरूपा यतः सदा ।
ईशाङ्गवाचिनो वा स्युस्तेषामेव तदर्थतः ॥
सप्तसु प्रथमा यस्मात्तद्योग्यार्थता भवेत् ।
इति ब्रह्मतर्के — बृ–भा–१–९.

39 तदपेक्षां विनैवासौ निर्गत्य पुरुषोत्तमः ।
वहत्येवानिशं सर्वं निरूढं तेन तज्जगत् ॥
प्रतिप्रतिस्थितो रूपैर्यस्माद्धत्ते हरिः सदा ।
अतः प्रत्यूह्यते तेन व्यक्ताव्यक्तमिदं जगत् ॥
इति ब्रह्मतर्के — बृ–भा–४४–१७.

40 शुभाशुभानां दाहादौ साम्यात्सामाग्निरीरितः ।
स्वो विष्णुः सागरे रन्ता वरुणोऽतः स्वरः स्मृतः ॥
उदयाज्जगत्प्रणेतृत्वात्सूर्यः प्राण उदाहृतः ।
अत्ता रुद्रस्तद्विरोधाद्दक्षः स्यादन्ननामकः ॥
स्वो विष्णुः तद्गतिर्वायुः तद्वो मुक्तौ सदाशिवः ।
अतःस्वर्गोऽसुसंस्थत्वादसाविति च कीर्तितः ॥
सर्वदेवान्तरत्वात्तु ब्रह्माऽयं समुदाहृतः ।



लोको ज्ञानस्वरूपत्वादेतेषां परमो हरिः ॥
इति ब्रह्मतर्के — छां–भा–४–२२.

41 नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः ।
ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति ॥
नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते ।
सर्वार्था प्रथमा यस्मात्सप्तम्यर्था ततो मता ॥
इति ब्रह्मतर्के — सू–भा–६६–१२.

42 ज्ञेयत्वं दुर्घटस्यापि घटनाऽधिकशक्तिता ।
अभेद ईश्वरेणापि सृष्ट्याद्यावन्तरं गता ॥
उच्येत यस्याः सा माया हरेरिच्छाऽथवा बलम् ।
भगवत्तन्त्रता यस्याः तद्भार्यात्वं सुरूपता ॥
उच्येत माया सा तु श्रीः दोषयुक्ता जडा स्मृता ।
परिणामिनी च यस्यास्तु दोषाच्चेतनता तथा ॥
शैवली नाम सा माया जगद्बन्धात्मिका सदा ॥
इति ब्रह्मतर्के — भा–ता–२६–१७

43 प्रायस्तु स्तुतिशब्देषु मिश्रा वाचो हरिं विना ।
केचिज्जीवगुणास्तत्र तन्नियन्तुर्हरेः परे ॥
एकस्थानैककार्यत्वाद्विष्णोः प्राधान्यतस्तथा ।
जीवस्य तदधीनत्वान्न भिन्नाधिकृतं वचः ॥
इति ब्रह्मतर्के — भा–ता–६७–१८.

44 रूढियोगौ विना कश्चित् नैवार्थो वेदगो भवेत् ।
तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके ॥
अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पना ।
ज्ञाते विशेषविज्ञानं व्यवहारोऽपि रूढितः ॥
इति ब्रह्मतर्के — कर्मनि–७–१५.

45 इडावत्सरनामाऽसौ नक्षत्रद्वादशे स्थितः ।
तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः ॥
वत्सरो यः स्थितस्त्वह्नां षष्ठ्युत्तरशतत्रये ।
गुर्वावर्ते द्वादशांशे यःस्थः स परिवत्सरः ॥
सौरद्वादशके मासे यःस्थः संवत्सरो हरिः ।
एवं स कालनामाऽपि कालस्थः परमेश्वरः ॥
इति ब्रह्मतर्के — भा–ता–३२–१५.

46 स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः ।
ससर्ज मातापितृवदूर्णनाभिवदेव वा ॥
प्रधानं परिणाम्येशो निर्विकारः स्वयं सदा ।
न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनम् ॥
नाचेतनविकारोऽपि चेतनः स्यात्कदाचन ।
न चान्यस्यान्यरूपत्वं विकृतत्वेऽपि दृश्यते ॥
न क्षीरादन्यथा दध्नः केनचिद्दृश्यते क्वचित् ।
सर्वज्ञाद्ब्रह्मणोऽन्यत्वं जगतो ह्यनुभूयते ॥
अनु–१५–३.

47 पदाद्याश्रयणाद्विष्णोः पृथिव्यादि पदादिकम् ।
तज्जत्वाद्वाऽथसादृश्याद्यथानुर्भूमिगं पदम् ॥
इति ब्रह्मतर्के— भा–ता–७५–७.

48 न चानवयवं वस्तु क्वचित्स्यान्मानगोचरम् ।
पूर्वापरादिभेदेन यतोंऽशोऽस्यावगम्यते ॥
उपाधिरप्येकदेशसम्बद्धः सन्तमेव हि ।
ज्ञापयेद्धेदमखिलं ग्रसन्स विभजेत्कथम् ॥
तस्माद्गुणादिकमपि नास्त्यनंशतया क्वचित् ।
भावाभावव्यवहृतेर्विद्यमानेऽपि वस्तुनि ॥
भेदाभेदौ गुणादेश्च जडे वस्तुनि संस्थितौ ।
चेतने शक्तिरूपेण गुणादेर्भाव इष्यते ॥
सुतोऽयं बलवान्विद्वानित्यादिव्यवहारतः ।
न चैवं शक्तिरूपेण जडे व्यवहृतिः क्वचित् ॥
एकमेवाद्वितीयं तन्नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥
इत्यादिश्रुतिमानाच्च परमैश्वर्यतस्तथा ।
सर्वं तु घटते विष्णौ यत्कल्याणगुणात्मकम् ॥
इत्यादि ब्रह्मतर्के— गी–ता–२७–२.

49 सर्वान्तर्यामिकत्वात्तु सर्वनामा जनार्दनः ।
न तु सर्वस्वरूपत्वात्सर्वेशोऽसौ हरिर्यतः ॥
इति ब्रह्मतर्के—भा–ता–५२–६.



50 मनःस्थितस्य यद्विष्णोः सम्बन्धादेव कामतः ।
जातः सुतः सुखे हेतुः परानन्दो हरिः किमु ॥
इति ब्रह्मतर्के— बृ–भा–४७–३.

51 ततत्वादेकरूपत्वात्तत्परं ब्रह्म कीर्तितम् ।
तदेव तादृशं प्रोक्तं नैवान्यत्तादृशं क्वचित् ॥
तदेतत्सत्यमेवासीद्वासुदेवाख्यमव्ययम् ॥
इति ब्रह्मतर्के— बृ–भा–६०–२१.

52 तदधीनं यतःसर्वं सर्वशब्दैस्ततो हरिः ।
मुख्याभिधेयस्त्वन्यानि तत्सङ्गादुपचारतः ॥
इति ब्रह्मतर्के — बृ–भा–६५–१५.

ब्रह्मतर्के च—

53 बद्धो बन्धादिसाक्षित्वाद्विष्णो भिन्नेषु संस्थितेः ।
निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः ॥
इति –सू–भा–४८–२२.

ब्रह्मतर्के च—

54 नामादिप्राणपर्यन्ताद्यो हि सत्यादिरूपवान् ।
तस्मै नमो भगवते विष्णवे सर्वजिष्णवे ॥
इति –सू–भा–५६–५.

55 विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ ।
परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरता ॥
इति हि ब्रह्मतर्के –सू–भा–६१–१६.

56 आश्चर्यो भगवान्विष्णुः यस्मान्नैतादृशं क्वचित् ।
तस्मात्तद्गोचरं ज्ञानं तद्गोचरवदेवतु ॥
इति ब्रह्मतर्के—गी–ता–१०–१०.

57 प्रियमेव यतः सर्वमप्रियं नास्ति कुत्रचित् ।
स्वयमेव यतः कर्ता शान्तोऽतो हरिरीश्वरः ॥
इति ब्रह्मतर्के—भा–ता–११–७.

58 नित्यं गृहीताः सत्वाद्याः जीववज्जडवन्नतु ।
मिथ्यामानात्स्वरूपत्वात्स्वातन्त्र्याद्धरिवतु ॥
इति ब्रह्मतर्के— भा–ता–१७–१०.

59 कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः ।

देशकोटिविहीनत्वं देशानन्त्यं तथैव च ॥
गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः ।
आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् ॥
तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम् ।
तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते ॥
परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते ।
तस्याचिन्त्याद्भुतैश्वर्याद्व्यवहारार्थमेव च ॥
गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ।
व्याप्तत्वं देशतोप्यस्ति सर्वरूपेषु यद्यपि ॥
न च भेदः कश्चित्तेषां अणुमात्रोपि विद्यते ।
तथापि विद्यतेऽणुत्वं यस्मादैश्वर्ययोगतः ॥
तस्माद्व्यवहारार्थमव्याप्तत्वं च भण्यते ।
यत्तस्य व्यापकं रूपं परं नारायणाभिधम् ॥
शून्यं ब्रह्मेति तत्प्राहुः द्वितीयं स्रष्टृ यत्ततः ।
परमः पुरुषो नाम मितं तद्देशतो विभोः ॥
तृतीयं वासुदेवाख्यं जगदावरकं मितम् ।
देशतो जगदाविष्टं तुरीयं विष्णुनामकम् ॥
इति ब्रह्मतर्के – भा–ता–३१–२१.

60 जगतां वर्धयन् सत्वं यदा रक्षति केशवः ।
हयग्रीवादिरूपेण शुक्लवर्णस्तदा विभुः ॥
वर्धयंस्तु रजो येन जगदुत्पादयेद्धरिः ।
तद्रक्तं जामदग्न्यादि रूपं येन विनाशयेत् ॥
वर्धयंस्तु तमो लोके तत्कृष्णं यादवादिकम् ।
सर्वत्र सर्वं कुरुते विशेषस्तत्र कीर्तितः ॥
ज्ञानदानादिना रक्षा महतां संप्रकीर्तिता ।
रागदानेन महतां सृष्टिः सृष्टिरुदीर्यते ॥
असतां तु तमो वृद्धिं कुर्वन् पातयते यदा ।
सतां विवर्धनार्थाय कृष्णरूपी तदा हरिः ॥
ज्ञानाद्युत्पत्तिकृच्चापि रूपं रक्तं विभोः स्मृतम् ।
तमोविनाशकमपि कृष्णं विष्णोरुदाहृतम् ॥
आचार्यादिषु रागार्थं शुद्धसत्वात्मकं रजः ।
यतो व्यपेक्षितं नाशे तमसोऽपि ततः परम् ॥
तमो द्वेषात्मकं शुद्धं सत्वात्मकमुदीर्यते ।



एवं स्मृतिगतानां तु रागाद्याः न गुणोद्भवाः ॥
शुद्धज्ञानात्मकाः सर्वे मुक्तानां नात्र संशयः ।
सर्वत्र सर्वकृच्चापि हयग्रीवादिरूपकः ॥
ज्ञानादिरक्षको विष्णुर्जामदग्न्यादिरूपवान् ।
ज्ञानाद्युत्पादको नित्यं कृष्णादिर्दोषनाशकः ॥
एकरूपोऽपि भगवान् बहुरूप इवेयते ।
अचिन्त्यैश्वर्यरूपत्वात्पूर्णानन्दैकरूपकः ॥
इति ब्रह्मतर्के – भा–ता–७६–६. –तत्वदी–पु–२७१.

61 अन्तर्यामीतु यज्ञादेर्विष्णुरिज्यादिनां रमा ।
तत्तच्छब्दैस्ततो वाच्यौ न तु सर्वस्वरूपतः ॥
अन्तर्यामी श्रियश्चापि विष्णुरेव न संशयः ।
नान्तर्यामी कश्चिदस्ति विष्णोः क्वापि कुतश्चन ॥
इति ब्रह्मतर्के–भा–ता–पु–६३–१७.

तृतीयभागे अभिमानिदेवताः विषयः ।

१) देवतानामाधिक्यं निरूपयितुं तत्तदभिमानित्वनिरूपणं ।
२) वायुचतुर्मुखयोः समानजननेऽपि पौर्वापर्यसमर्थनम् ।
३) शेषादीनां बिम्बप्रतिबिम्बभावसमर्थनम् ।
४) देवानां सुखित्वेऽपि मोहनाय कचिद्दुःखादिप्रदर्शनम् ।
५) चतुर्मुखादन्यस्य पूर्णभक्त्याद्यभावकथनम् ।
६) चतुर्मुखस्य भयादिप्रदर्शनम् ।
७) उत्तरत्र जायमानप्राणिनां स्वभावदर्शनार्थं कदाचिच्चतुर्मुखविषयक कथानिरूपणम् ।
८) केषाञ्चिद्देवानां द्रव्यादिविशेषस्वामित्वकथनं ।
९) देवतानामवान्तरस्वामित्वकथनं । तृतीयभागीयोऽयं विषयः बृहद्भाष्ये द्विस्थलयोर्भागवततात्पर्ये पञ्चसु, गीतातात्पर्ये एकवारं, एवं त्रिषु ग्रन्थेषु अष्टसु तत्वप्रदीपे एकवारं एवं नवसु स्थलेषु प्रदर्शितः ।

62 सर्वाभिमानिनो देवास्तत्रापि ह्युत्तरोत्तरम् ।
आधिक्यं वक्तुमेतेषां पृथक्स्थानमुदीर्यते ॥
आधिक्यक्रम एवात्र शास्त्रतात्पर्यमिष्यते ।
स्थानेषु त्ववरेषां च परे सन्ति न चेतरत् ॥

तथाऽपि पितुरर्थो यः पुत्रस्याप्युपचर्यते ।
अव्यक्तादिपदार्थानां सर्वं तदभिमानिनः ॥
इति हि ब्रह्मतर्के—तत्व दी—४५२.

63 वायुरेव यतो ब्रह्मपदं नियमतो व्रजेत् ।
सहैव जननेप्यस्मात्पूर्वं वायोर्जनिं वदेत् ॥
क्वचित्तु ब्रह्मणः पूर्वं प्राधान्यात्तत्पदस्य च ॥
इति ब्रह्मतर्के— बृ—भा—३—१७. तत्व दी—३७४.

64 शेषस्य प्रतिबिम्बास्तु देवाः शेषस्तु ब्रह्मणः ।
स परब्रह्मणश्चैव ते स्वबिम्बप्रदर्शकाः ॥
ततः स्वबिम्बद्वारेण परमात्मप्रदर्शनम् ॥
इति ब्रह्मतर्के— भा—ता—४२—१४.

65 आयासदुःखव्रीडादीन् प्रायशः सुखिनोऽपितु ।
नियमादृषिभूपेषु मोहायादर्शयन् सुराः ॥
इति ब्रह्मतर्के—भा—ता—५१—४.

66 ब्रह्मणोऽन्यस्य नो पूर्णां दद्याद्भक्तिं जनार्दनः ।
मुक्तिं ददाति सर्वेषां मुक्तानां को ह्यधीशिता ॥
इति ब्रह्मतर्के—भा—ता—५८—७.

67 भगवत्प्रीतये नित्यं ब्रह्मणो ये भयादयः ।
न वृथा तस्य भावःस्यात्कश्चित्तेऽपि क्षणार्धगाः ॥
अज्ञानं च चतुर्वारं द्विवारं भयमेव च ।
शोकोऽपि तावान्नान्यत्र कदाचिद्ब्रह्मणो भवेत् ।
तत्रापि भगवत्प्रीत्या उन्नत्यैवास्य तद्भवेत् ॥
इति ब्रह्मतर्के— भा—ता—६०—२२.

68 एतस्य जगतो ह्यग्र आसीन्नारायणः परः ।
एकएव श्रिया सार्धं तमात्मापुरुषेत्यपि ॥
आहुस्तस्मात्पुरुषविधो ब्रह्मा समभवद्विभोः ।
ब्रह्मादेश्च श्रियश्चैव नित्यं विष्णुर्गुणाधिकः ॥
यथा तथैव रुद्रादेः ब्रह्मा यस्माद्गुणाधिकः
एतस्मात्पुरुषविधता ब्रह्मणः संप्रकीर्तिता ॥
सतु सर्वाःदिशो दृष्ट्वा नान्यदृष्ट्वा पितामहः ।
अब्रवीदहमस्मीति स्वाहेयत्वमनुस्मरन् ॥
हातुं शक्यमिदं सर्वमासीदेकोऽभवं यतः ।



अहेयत्वं स्वरूपस्य स एवं समचिन्तयत् ॥
ततोऽभवदहंनामा स चाभूत्पुरुषाभिधः ।
ओषणात्सर्वपापानां पूर्वं पुरुष उच्यते ॥
नारायणप्रसादेन य एवं पुरुषाभिधम् ।
वेद स्वाभिमतं यस्तु पूर्वं प्राप्तमभीप्सति ॥
ओषेत्सर्वमतुष्टः सन् ब्रह्मविष्णुप्रसादतः । १ ।
तस्य त्वेकस्य सहसा यतो भीः समजायत ॥
तस्माद्यापि चैकस्य निर्विवेकं भयं भवेत् ।
विममर्श ततो ब्रह्मा यस्मान्मे बाधको न हि ॥
मया सृज्या यतः सर्वे इतः पश्चात्तनो हरः ।
अतः कस्माद्बिभेमीति तस्य भीतिरपोहिता ॥
विष्णोरतिप्रियत्वाच्च तदन्येषां पितृत्वतः ।
कस्माद्भयं भवेत्तस्य समानाद्धि भयं भवेत् ॥
विरोधिनोऽधिकाद्वापि हीनाद्वा पारवश्यतः ।
हीनमेव यतस्तस्य सर्वमेव जगद्वशे ॥
न च जातं तदा सर्वं हरिरेव यतः परः ॥ २ ॥
न रेमे स ततो ब्रह्मा तस्मादेकस्य नो रतिः ।
अथापि पत्नीमैच्छच्च स स्थूलत्वमुपागतः ॥
दम्पती सहितौ यावद्ब्रह्मा चैव सरस्वती ।
तावद्देहोऽभवद्ब्रह्मा तदा देहं द्विधाऽकरोत् ।
पातनात्पतिपत्नीत्वशब्द एनोरजायत ॥
तस्मात्तयोरेकसुखं भवत्येवार्धपात्रवत् ।
ततस्तस्यामुमेशादीन्देवान्सर्वान्मनूनपि ॥
जनयामास बोधस्य प्राधान्यं हि मनुष्यता ॥ ३ ॥
सर्वज्ञाऽपि तु सा देवी विरिञ्चे भक्तिमत्यपि ।
तद्भार्यतामात्मनश्च नितरां धर्ममीक्षती ॥
अनाद्यनन्तसम्बन्धमुभयोरपि जानती ।
स्त्रीस्वभावं दर्शयन्ती साऽधर्ममिव चैक्षत ॥
नानासृष्टिप्रसिद्ध्यर्थं सा गोत्वादिकमाव्रजत् ।
वृषादिरूपतां सोऽपि प्राप्य सृष्टेदमञ्जसा ॥
सर्जनात्सृष्टिनामाऽभूत्तद्विरत्तत्पुत्रतां व्रजेत् ।
पिपीलिकान्तरुद्रादौ यथायोग्यत्वमात्मनः ॥
अथान्नादमथाप्यन्नं स्रक्ष्यामीति विचिन्तयन् ।

ओष्ठद्वयं ममन्थान्तः हस्तौ चैव परस्परम् ।
तन्मुखाच्चैव हस्ताभ्यां अन्तरग्निरजायत ॥
एवं सर्वस्य हेतुत्वात्सर्वस्याधिपतित्वतः ।
सर्वे देवा एष एवेत्याहुर्वेदविदो जनाः ॥
स्वतन्त्रेषु यतः शब्दाः वर्तेयुस्सर्व एव च ।
स रेतसः पुनः सोममसृजद्ब्रह्मविद्वरः ॥
सर्वाधिकोऽपि योग्यत्वात्मर्त्यधर्मतया पुरा ॥
अवमो योग्यताहीनानप्यायुर्मात्रतोऽधिकान् ।
यतोऽस्यागतिस्सृष्टिस्तं देवं यो वेद पूरुषः ॥
विष्णोः प्रसादतः सृष्टिं देवलोके स जायते ।
आत्मयोग्यानुसारेण सुखज्ञानादियुक्तता ॥
इति ब्रह्मतर्के बृ–भा–६–११.

69 द्रव्येशः शङ्करः प्रोक्तः क्रियेशो गरुडः स्मृतः ।
करणेशस्तथा ब्रह्मा वायुराधारपः स्मृतः ॥
इति ब्रह्मतर्के—भा–ता–५८–७.

70 अखिलप्रेरको विष्णुः ब्रह्माद्यास्तदवान्तराः ।
असुराः अशुभेष्वेव कामादेरभिमानिनः
तत्र कामः कालनेमिः सर्वं धूममलोल्ववत् ।
शुभमध्याधमजनं क्रमादावृत्य तिष्ठति ॥
महाशनस्य तस्येदं नालं तेनानलोऽग्निवत् ।
भुञ्जान इन्द्रियाविष्टो ज्ञानास्त्रेणैव दह्यते ॥
इति ब्रह्मतर्के— गी–ता–१५–१९.

### चतुर्थभागे जीवाः विषयः ।

१) प्रपञ्चजीवयोस्सम्बन्धस्वरूपकथनम् ।
२) "न ऋते" इति श्रुतिसत्त्वेऽपि परमात्मेतरचेतनानामपि प्रवृत्ति-कथनम् ।
३) जीवस्य सदृष्टान्तं हरेर्भिन्नत्वकथनम् ।
४) सृष्टेः पूर्वं परतश्च जीवजडानां सत्त्वेऽपि स्वातन्त्र्येण निषेधकथनम् ।
५) अनादिभक्तेर्योग्यतास्वरूपत्वकथनम् ।
६) जीवानां ब्रह्मणि दोषबुद्धेस्सदृष्टान्तं भ्रान्तित्वकथनम् ।



७) जीवानामेवाभिमानित्वकथनम् ।
८) निषिद्धकामनायुक्तानां हरेरज्ञेयत्वादिकथनम् ।
९) सृष्टेराद्यन्तयोः (प्रलयकालेऽपि) जीवस्य सत्त्वाज्जीवस्वरूपमाद्यन्तवन्न किन्तु आद्यन्तवज्जडदेहसम्बन्धादाद्यंतवत्त्वम् ।
१०) ज्ञानार्थयोरैक्यवाक्यगतिकथनम् ।
११) "गोप्यः कामात्" इत्यादौ भक्तियुक्तत्वं कामादौ सर्वत्र ग्राह्यमिति निरूपणम् ।
१२) बलेरानन्दोद्रेककारणकथनम् ।
१३) नीचस्याधिक्यकथने निमित्तम् ।
१४) जीवस्वरूपज्ञानवृत्तिज्ञानयोः स्वरूपविवेचनम् ।
१५) जीवज्ञाननानात्वादिना अतादृशस्याप्यर्थस्य नानात्वादिकथनम् ।

अस्मिन् ग्रन्थे भागवततात्पर्ये त्रयोदशवारं माण्डूकच्छान्दोग्ययोरेकैकवारमिति त्रिषु ग्रन्थेषु पञ्चदशवारं जीवो निरूपितः ।

71 तन्वा स्वस्वामिसम्बन्धः प्रपञ्चोऽस्य शरीरिणः ।
वस्तुतोऽसौ न चैवास्ति परमस्य वशे यतः ॥
तन्वादिकस्तथाऽप्येष ह्यभिमानात्प्रदृश्यते ।
अतः स विद्यत इति ह्यङ्गीकारो भवेद्यदि ॥
तथापि भगवज्ज्ञानात्स निवर्तेदसंशयः ।
इति ब्रह्मतर्के—मां–भा–५–१८.

72 अचेतनं चेतनेभ्यो दैवतेभ्यश्च चेतनाः ।
देवाः प्राणाच्च स प्राणो विष्णोरेव सदैवतु ॥
स्वभावं च प्रवृत्तिं च विकारं च समाप्नुयुः ।
कश्चिद्भावकृते तेषां नैतत्स्याच्च कदाचन ॥
अचेतनप्रवृत्तौ तु न दृष्टान्तोऽस्ति कश्चन ।
चेतनानां प्रवृत्तेश्च दृष्टत्वादेव सर्वशः ॥
अदृष्टं दृष्टवज्ज्ञेयं यथादृष्टप्रणेतृकम् ।
विसर्पत्तण्डुलं दृष्ट्वा कल्प्या तत्र पिपीलिका ॥
न तद्दृष्ट्वैव दृष्टानां अपिपीलिकसर्पणम् ।
एवं दृष्टानुसारेण चिदधीनमचेतनम् ॥

दुर्घटा शक्तिरपिहि पिशाचानां हि दृश्यते ।
देवानां किमु किम्वेव परमस्य हरेः प्रभोः ॥
इत्यादि ब्रह्मतर्के— छा—मा—३७—८.

73 स्वरूपं जायमानं च आकाशं च घटे द्विधा ।
स्वरूपं जायमानं तु घटे निर्भेदमेवतु ।
भिन्नवद्व्यवहाराय समर्थं तल्लये भवेत् ।
तद्वद्देवावतारेषु देहस्थश्च हरिः स्वयम् ।
भिन्नवद्व्यवहाराय शक्तो लीने जगत्यपि ।
स एव पूर्ववज्ज्ञेयो निर्विशेषेण केशवः ॥
जायमानं घटे जाते जायते तल्लये न तु ।
तस्माद्भिन्नं महाकाशादेवं जीवोपि कीर्तितः ॥
उपाधेश्चैव नित्यत्वाचैव जीवोपि नश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम् ।
न चाभिन्नत्वमीशेन चिन्मात्रत्वं च विद्यते ॥
इति ब्रह्मतर्के—भा—ता—९—१४. —तत्वदी—३४१.

74 विष्णोरधीनं प्राक्सृष्टेः तथैव च लयादनु ।
अस्य सत्वप्रवृत्यादि विशेषेणाधिगम्यते ॥
स्वातन्त्र्यं स्थितिकाले तु कथंचिद्बुद्धिमोहतः ।
प्रतीयमानमपि तु तस्मान्नैवेति गम्यते ॥
जनिष्येऽहं लयिष्येऽहमिति नह्यभिसन्धितः ।
अतो जीवनमप्येतद्ध्रुवेदीशाभिसंहितम् ॥
अतः स्वरूपभेदेऽपि ह्यात्मैवेदमिति श्रुतिः ।
वदत्यस्येशतन्त्रत्वाद्यथाशक्तस्त्वसन्निति ॥
विद्यन्ते हि तदा जीवाः कालकर्मादिकं तथा ।
कान्यथाहि पुनः सृष्टिः पूर्वकर्मानुसारिणी ॥
इति ब्रह्मतर्के— भा—ता—२१—२.

75 स्वतः सद्गतियोग्यस्य पुत्रादेर्हेतुता भवेत् ।
योग्यताऽनादिभक्तिःस्यादयोग्यस्य कुतो गतिः॥
इति ब्रह्मतर्के— भा—ता—३४—१७.

76 यथोद्चलनाद्वृक्षप्रतिबिम्बप्रचालनात् ।
तटस्थवृक्षचलनं कल्पयेदवुधो नरः ॥
तथा मनसिजैर्दोषैः आभासे दूषिते नरे ।



आभासिनो ब्रह्मणश्च दोषमज्ञः प्रकल्पयेत् ॥
आत्मनश्चक्षुषो भ्रान्त्या यथा पश्येद्भ्रमं भुवः ।
तथैव स्वात्मनो दोषाद्दोषवद्ब्रह्म पश्यति ॥
इति ब्रह्मतर्के— भा—ता—६६—३.

77 लेपाभिमानी जीवस्तु स्वरूपानुभवी न च ।
मुक्तः प्राक्तन मान्युक्तो न मानी विष्णुरुच्यते ॥
सर्वं ममेति पश्यन्नप्यलेपाभिमतिर्यतः ।
सम्यक्स्वरूपानुभवात्स्वतन्त्रत्वाददोषतः ॥
इति ब्रह्मतर्के—भा—ता—६७—१.

78 निषिद्धकामयुक्तानामसतां तु विशेषतः ।
दुर्ज्ञेयो भगवान्विष्णुर्हृदिस्थो स्मृतहारवत् ॥
अकामत्वेन भजतां ददात्यभयमन्तकात् ।
पूर्णानन्दादि तेऽश्नन्ति पूर्णानन्दादिकाः स्वतः ॥
ब्रह्मणो ब्रह्मसम्पत्तिमत आह श्रुतिः स्फुटम् ।
न परब्रह्मतावाप्तिर्न ते विष्णाविति श्रुतेः ॥
परब्रह्ममता चैषां ब्रह्मलोकात्परा गतिः ।
न परब्रह्मरूपत्वमेतमेवेति च श्रुतेः ॥
अन्येषां म्रियमाणानां प्राणा भागत एव तु ।
देवतास्वेकतां यान्ति भागतोऽनुव्रजन्ति तम् ।
ज्ञानिनां मुच्यमानानां नैव यान्ति स्वदेवताः ॥
तेनैव सह संयान्ति ततोऽनुत्क्रमणश्रुतिः ॥
इति ब्रह्मतर्के— भा—ता—९२—२०.

79 आद्यन्तयोरनुगमादाद्यन्तरहितस्य तु ।
आद्यन्ते भाविनो मध्ये कथमन्यादृशं वपुः ॥
इति ब्रह्मतर्के—भा—ता—१२१—१५.

80 यथैवार्थस्तथा ज्ञानं ज्ञानार्थैक्यमुदाहृतम् ।
तथा कृतयुगे प्रायस्तदन्येषु तु कस्यचित् ॥
इति ब्रह्मतर्के— भा—ता—१२९—१९.

81 गोप्यः कामयुता भक्ताः कंसाविष्टः स्वयं भृगुः ।
ज्ञेयो भययुतो भक्तः चैद्यादिस्थाः जयादयः ॥
विद्वेषसंयुता भक्ताः वृष्णयो बन्धुसंयुताः ।

बहुमानस्नेहसाम्याद्देवा भक्ताः प्रकीर्तिताः ॥
स्नेहोपसर्जनादेव बहुमानान्मुनीश्वराः ।
बहुमानोऽपि देवानां ऋषिभ्योऽप्यधिको मतः ॥
ब्रह्मवीन्द्रेन्द्रकामादेरितरेषां यथाक्रमम् ॥
इति ब्रह्मतर्के—भा–ता–६७–११.

82 ऐन्द्रं पदं नान्तरीयं फलं तु हरितोषणम् ।
जगद्धातुर्बलेर्यस्मादानंदोद्रिक्तता भवेत् ॥
इति ब्रह्मतर्के—भा–ता–१९–१२.

83 उत्तमैरधिकत्वं वा साम्यं वा विजयोऽपि वा ।
उच्यतेऽपि तु नीचानां मोहार्थं वाप्युपेक्षया ॥
मूढदृष्ट्यनुसाराद्वा किंचित्साम्येन वा कचित् ॥
इति ब्रह्मतर्के— भा–ता–२३–२२.

84 अपरोक्षतया वृत्तिज्ञानभेदनिरीक्षणम् ।
स्वरूपज्ञानसंस्थितया ज्ञानत्याग उदीर्यते ॥
स्वरूपज्ञानतः सम्यक् रतिः विष्णुकथासु च ॥
इति ब्रह्मतर्के—भा–ता–५३–९.

85 भिन्नस्य त्वेकभावेन तथैकस्य च भेदतः ।
ज्ञानं नानार्थधीः प्रोक्ता नानात्वादर्थतद्धियोः ॥
इति ब्रह्मतर्के — भा–ता–१११–२१.

पञ्चमे भागे देवतातारतम्यं विषयः तत्र

१) श्रियादीनां भक्तिज्ञानादितारतम्यकथनम् ।

२) तेष्वेव परस्परं नियम्यनियामकभावकथनम् ।

३) असतां दुःखक्रमेण सतां सुखवृद्धिकथनम् ।

४) तारतम्यकथनम् । अभिमानित्रैविध्यकथनं च । एतत्प्रसक्तं चान्यत् ।

अयं विषयः भागवततात्पर्ये एव चतुर्षु स्थलेषु निरूपितः ।

86 श्रीब्रह्मब्राह्मीवीन्द्रादित्रिकतत्स्त्रीपुरुहूताः ।
तदन्ये च क्रमादेव सदा मुक्तौ स्रुतावपि ॥
हरिभक्तौ च तज्ज्ञाने सुखे च नियमेन तु ।
परतः स्वतः कर्मतो वा न कथंचित्तदन्यथा ॥
इति ब्रह्मतर्के— भा–ता–६९–११.



87 यत्राभिमानिनो देवान् स्मरन्तीन्द्रियमानिनाम् ।
वशगान् तान् मनोमानिसुरेन्द्रस्य वशे स्थितान् ॥
वेदात्मिकायाः पार्वत्याः ताः रुद्रस्य वशे स्थिताम् ।
वर्णत्रयात्मकं रुद्रं शेषे तु प्रणवात्मके ॥
बिन्दुरूपसरस्वत्यां तं तां तस्यां पुनर्न्यसेत् ।
मूलस्थानादरूपायां तां वायौ तं जनार्दने ।
प्रकृतावथवा प्राणं तामेव पुरुषोत्तमे ॥
इति ब्रह्मतर्के—भा–ता–७१–७.

88 सतां सुखविवृध्यर्थमसतां पीडनं हरेः ।
यावच्चासुरदुःखं स्यात्तावदेव सुखं भवेत् ॥
तत्रापि तारतम्येन ब्रह्मणोऽभ्यधिकं सुखम् ।
यावत्क्षीणं तमस्तावत् प्रकाशस्य तु वर्धनम् ॥
सर्वस्माच्च कलेः पीडा ब्रह्मणोऽभ्यधिकं सुखम् ।
तस्मात्सतां रक्षणाय सर्वकर्म हरेः स्मृतम् ॥
इति ब्रह्मतर्के—भा–ता–७६–१६.

89 देहेन्द्रियप्राणधियां त्रिधैव त्वभिमानिनः ।
तत्रोत्तमा देवतास्ताः सर्वदोषविवर्जिताः ॥
गुणैस्सर्वैः सुसम्पन्नाः विरिञ्चादुत्तरोत्तरम् ।
मध्यमा गुणदोषेताः असुरा अवमा मताः ॥
ते सर्वे दोषसंयुक्ताः आचित्तादुत्तरोत्तरम् ।
तेभ्योऽन्यो मानुषो जीवस्ताभ्यां देवासुरावपि ॥
जीवाभिमानिनश्चैव त्रिविधाः सम्प्रकीर्तिताः ।
जीवमान्युत्तमो ब्रह्मा मध्यमः स्वयमेव तु ॥
अधमः कलिरुद्दिष्टस्तत्र मध्यमनीचयोः ।
मृतिजन्मक्षुधादुःखप्रभृत्यखिलमेव तु ॥
नोत्तमस्य तु जीवस्य देहादेश्च कथञ्चन ।
जन्मादिकृतदुःखं तु देहमान्यसुरस्य ह ॥
सुप्त्याद्यप्ययजं दुःखमसुरेन्द्रियमानिनः ।
क्षुन्निमित्तं तु यद्दुःखं प्राणमान्यसुरस्य तत् ॥
भयतर्षादिजं दुःखं मनोमान्यसुरस्य च ।
केवलं त्वान्तरं दुःखं बुद्धिमान्यसुरस्य तत् ॥
नीचोऽस्मीति तु यद्दुःखमहंमान्यसुरस्य तत् ।
अतीतादिस्मृतेर्दुःखं चित्तमान्यसुरस्य च ॥

जीवमान्यसुरस्य स्यात्सर्वं तत्समुदायतः ।
एवमेव सुखं देवेषूभयं मध्यमेषु च ॥
असुराणामधर्मस्य वृध्या सुखमपीष्यते ।
देवानां नैव केनापि दुःखं प्रीतिस्तु धर्मतः ॥
अधर्मोऽपि प्रीतये स्यादसुराणामधोगतेः ।
देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ॥
तेषां दुःखादिकं किंचिदसुरावेशतो भवेत् ॥
प्राणस्य नासुरावेशः आखणाश्मसमो हि सः ।
संपूर्णानुग्रहाद्विष्णोः प्राणः पूर्णगुणो मतः ॥
असुराणां सुखाद्याश्च देवावेशादुदीरिताः ।
स्वतस्तु निर्गुणाः सर्वे सर्वदोषात्मकाः मताः ॥
विविच्यैवं जगत्सर्वं स्वात्मानं च पृथक् स्थितम् ।
सर्वतश्च पृथक्संस्थं विष्णुं सर्वोत्तमोत्तमम् ।
जानन्ति ये भागवताः त उक्ता उत्तमोत्तमाः ॥
इति ब्रह्मतर्के – भा–ता–९५–५.

## षष्ठे भेदो विषयः

१) विष्णोः सर्वोत्कर्षार्थं भेदसमर्थनम् ।

२) आकाशादौ उपाधिर्विद्यमानस्य भेदस्य ज्ञापक एव न तु कारक इति कथनम् ।

३) पञ्चभेदकथनम् ।

४) भेदशब्दस्यानेकार्थकथनम् ।

५) एवं च्छान्दोग्ये द्विस्थलयोः अनुव्याख्याने बृहदारण्यके च एकवारं इति त्रिषु ग्रन्थेषु आहत्य चतुर्षु स्थलेषु प्रदर्शितः ।

## भेदप्रकरणम्

90 बह्वभ्यासात्स आत्मेति मुक्तौ जीवेशयोर्भिदा ।
प्रधानतत्परत्वेन दृश्यतेत्यादरात्सदा ॥
महातात्पर्ययोगाच्च स एवार्थोऽवगम्यते ।
तात्पर्यं परमं विष्णोरत्युद्रेके विशेषतः ॥
सर्वश्रुतिस्मृतीनां च दृश्यतेऽन्यत्तदर्थतः ।
स च जीवेशयोर्भेदे सर्वोद्रेको हि युज्यते ॥
बह्वभ्यासस्तआत्मेति श्रुतावादरतस्ततः ।



ममात्मेति वचो यत्र विष्णोरपि च दृश्यते ॥
देहस्यापि स्वरूपत्वज्ञापनं तत्प्रयोजनम् ।
न ह्यप्रयोजकं वेद पदं वर्णोऽथवा स्वरः ॥
देहस्वरूपता विष्णोः न ममेति पदं विना ।
सम्यग्ज्ञापयितुं शक्या ततस्तत्पदमिष्यते ।
ततस्तआत्मेतिवचो भेदाभावे न युज्यते ॥
भिक्षया भक्षणं तस्मादानन्दस्य ततोऽवदत् ।
मुक्तानामेकदेशत्वं ब्रह्मानन्दव्यपेक्षया ॥
विप्रुट्त्वं प्रतिबिम्बत्वं श्रुतिषूक्तं हि सर्वशः ।
तथापि पूर्णानन्दत्वममुक्तानां व्यपेक्षया ॥
ब्रह्मादेस्तारतम्यं च मुक्तावेव सदातनम् ।
दृष्टादृष्टेषणानाशान्निर्दुःखत्वं च सर्वदा ॥
परब्रह्मत्ववचनं मुक्तानां यत्र दृश्यते ।
जीवेषु ब्रह्मशब्दोक्तेः परत्वं तु विमुक्तितः ॥
तत्परब्रह्मता तेषां बद्धजीवोच्चता मता ।
ततो ब्रह्माणने योग्यः पाण्डित्यं प्राप्नुयात्परम् ॥
पाण्डित्यमागमज्ञत्वं बाल्यं युक्तिसहायता ।
मौनं तूपासनासिद्धिरमौनं भगवद्दृशिः ॥
एतान्याप्य भवेन्मुक्तिः मुक्तो वै भिक्षुको भवेत् ।
नह्यन्यभिक्षितं विष्णुः दद्यान्नियमतः कचित् ॥
मुक्तस्य भिक्षितं सर्वं दद्यानियमतो हरिः ।
अयोग्यभिक्षणं तेषां न कदाचित्तु युज्यते ॥
येनकेनापि नैतेषां भिक्षावृत्तिर्विनश्यति ।
प्रथमो ब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते ॥
अपरोक्षविन्मुक्तयोस्तु तार्तीयेनोभयोर्ग्रहः ।
अतो मुक्ता अमुक्ताश्च न स्वतन्त्राः कदाचन ॥
स्वतन्त्रस्तु सएवैको भगवान् पुरुषोत्तमः ॥
इति ब्रह्मतर्के – बृ–भा–३७–१९.

91 यस्तु भिन्नः स्वतः खादिस्तस्य भेदो ह्यबुद्धिनाम् ।
उपाधिभिर्ज्ञाप्य एव न तु भेदं स्वयं सृजेत् ॥
उपाधिरप्यभिन्नस्य भेदं साधयितुं कचित् ।
न क्षमः सिद्धभेदस्य ज्ञापकः स्यादबुद्धिनाम् ॥

आकाशा अप्यतस्त्वेते ह्यनन्ता अप्कणादिवत् ॥
इत्यादि ब्रह्मतर्के— छा—भा—९—१७.

92 जीवेश्वरगतो जीवेष्वथ जीवजडात्मनोः।
जडेशयोर्जडेष्वेवं पञ्चभेदः प्रपञ्चकः ॥
प्रकृष्टमोक्षहेतुत्वात्तज्ज्ञानं प्रतिकथ्यते।
प्रकृष्टपञ्चकत्वाद्वा प्रपञ्चोऽयं प्रकीर्तितः ॥
यद्ययं सादिरेव स्यान्निवर्तेत कदाचन।
न निवर्तते यतस्तेन नायं सादिर्भवेत्क्वचित् ॥
मायेति विष्णुविज्ञानं तन्मितत्वाच्च न क्वचित्।
भ्रान्तत्वमस्य यद्विष्णोः नैव भ्रान्तिः कथंचन ॥
रमते चात्र यद्विष्णुः न हि भ्रान्तौ रमेद्धरिः।
परमार्थे हरौ नैव भेदोऽस्ति जडजीववत् ॥
यद्ययं कल्पितो भेदः कस्मान्नैव निवर्तते।
तस्मा द्भूतभविष्याख्यभवदाख्यपराभिधाः ॥
तदन्ये चैक एवास्मिन् ओङ्काराख्ये जनार्दने।
अज्ञातनामके तस्मिन् न भेदोस्ति कथञ्चन ॥
इति ब्रह्मतर्के—छा—भा—११—४.

93 अभेदेपि विशेषेणैवान्य इत्युदितो हरिः।
भेदशब्दाः विशेषं तु हरावन्यत्र भिन्नताम् ॥
ब्रूयुर्हरेर्जीवजडैरपि भेदं हि मुख्यतः।
ब्रह्मतर्कवचोप्येवमत एकः स पञ्चधा ॥
अनु. पु. ७—१५

सप्तमे भागे ज्ञानी विषयः।

१) नीचादप्युत्तमस्य श्रवणेप्युत्तमत्वहान्यभावकथनम्।
२) ज्ञानिनां देवानां कर्मभिः विशेषकथनम्।
३) स्वस्योत्कर्षसिद्धये विदुषापि न्याय्यचरणविधिः।
४) उत्क्रान्तस्य ज्ञानिनः गमनमार्गनिरूपणम्।
५) ब्रह्मदर्शनस्य प्रकारविशेषप्रदर्शनम्।
६) कर्मन्यासस्य स्वरूपं निर्दिश्य तस्य हरिप्रियत्वकथनम्।
७) बहुश्रुतस्वरूपप्रदर्शनम्।



८) हरिसाक्षात्कारस्य यावदारब्धं तिरोधानकथनम्।
९) ज्ञानिनां प्राप्यभेदकथनम्।
१०) ज्ञानिनां सुषुम्नादिमार्गविशेषकथनम्।
११) ज्ञानिनां परमात्मप्राप्तिप्रकारकथनम्।
१२) ज्ञानिनां तत्तद्वेत्तृत्वोपपादनम्।
१३) ज्ञानिनामपि विशेषज्ञप्त्यर्थं विपरीतार्थप्रश्नः।

सप्तमे भागे सूत्रभाष्ये गीतातात्पर्ये च त्रिस्थलेषु भागवततात्पर्ये चतुर्षु स्थलेषु बृहदारण्यके द्विवारं छान्दोग्यसाहित्येन पञ्चसु ग्रन्थेषु त्रयोदशसु स्थलेषु निरूपितः।

94 नीचादप्युत्तमाः ज्ञानं शृणुयुर्लीलया क्वचित्।
श्रोतृवक्तृविभेदोऽयं नाधिक्यज्ञापकस्ततः ॥
यस्याधिक्यं तु वेदोक्तं पञ्चरात्रेऽथवा भवेत्।
इतिहासे पुराणेवा सोधिको नेतरः क्वचित् ॥
इति ब्रह्मतर्के—बृ—भा—६५—८.

95 ज्ञानिनामपि देवानां विशेषः कर्मभिर्भवेत्।
चीर्णेऽकृते वा ज्ञानस्य न विशेषोऽस्ति कर्मणि ॥
इति च ब्रह्मतर्के— सू—भा—६०—१२.

96 अन्यायचरणाभावे न हि ज्ञानस्य बाधनम्।
अतो विद्वानपि न्याय्यं वर्तेतोत्कर्षसिद्धये ॥
इति ब्रह्मतर्के— सू—भा—६२—१२.

ब्रह्मतर्के च—

97 उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽतिवाहिकः ॥
ततोऽहः पूर्वपक्षञ्चाप्युदक्संवत्सरं तथा।
तटितं वरुणं चैव प्रजापं सूर्यमेव च।
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ॥
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥
सू—भा—७१—१७.

98 देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यत्र दृश्यते ।
निशायामिव सुव्यक्तं यथाऽन्यैर्ब्रह्म नेयते ॥
आश्चर्यवस्तुदृक् यद्वत् युक्तमन्यत्र पश्यति ।
ऐकाग्र्याद्वा सुखोद्रेकाद्देवाः सूर्यवदेव च ॥
प्रायशः सर्ववेत्तारस्तत्रापि ह्युत्तरोत्तरम् ।
गी. ता. १३–८

99 नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥
तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः ।
कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरः सदा ॥
यस्मात्स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।
तदधीनं स्वतन्त्रत्वं स्वावरापेक्षयैव तु ॥
जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।
पुमान् दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत्क्रमात् ॥
इति ब्रह्मतर्कवचनम् – गी–ता–१५–२.

100 लिङ्गादिसाम्ये यत्र स्यात्प्रयोगाधिक्यमेव तु ।
निर्णायकं भवेत्तत्र तेन स्यात् सुबहुश्रुतः ॥
इति ब्रह्मतर्के–गी–ता–१६–८. –तत्वदी–४५२.

101 प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्वादिकानपि ।
कर्माणि सूक्ष्मदेहञ्च जायमाना हरेर्दृशिः ॥
दहेदथापि सन्दिग्धेन्धनवत्तत्पुनः पुनः ।
यावदारब्धकर्म स्यादाविर्वापि तिरोव्रजेत् ॥
इति ब्रह्मतर्के–भा–ता–१०–१३.

102 ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान् ।
तत्र मुख्याः हरिं यान्ति तदन्ये वायुमेव तु ॥
अपक्वा ये न ते यान्ति वायुं वा हरिमेव वा ।
स्थानमात्राश्रितास्ते तु पुनर्जनिविवर्जिताः ॥
इति ब्रह्मतर्के–भा–ता–१३–२.

103 विषुवत्ता ब्रह्मयानो विशेषेण सुखं यतः ।
पिङ्गला देवयानं स्यात् पिङ्गाख्यसुखदं यतः ॥
इडाऽन्नदानात्पितॄणां एवं मार्गाः प्रकीर्तिताः ॥
इति ब्रह्मतर्के– भा–ता–१३–१०.



104 ज्ञानिनः प्रलये सर्वे ब्रह्मणा सह पार्थिवम् ।
परमात्मानमाविश्य वारिस्थं तत्समन्विताः ॥
अग्निस्थं तद्युताश्चैव तेन नीताश्च वायुगम् ।
नभोगतं तेन नीताः मनःस्थं तद्युतास्तथा ॥
ततो बुद्धिस्थमीशेशं ततोऽहङ्कारगं हरिम् ।
ततो विज्ञाननामानं महत्तत्वगतं हरिम् ॥
तत आनन्दनामानमव्यक्तस्थं जनार्दनम् ।
प्राप्य नावृत्तिमायान्ति शान्तीभूताः निरामयाः ॥
शेषां पदान्तरापेक्षा वाय्वादीनां महात्मनाम् ।
आवृत्य ते पुनर्यान्ति ज्ञानिनोऽपि निरामयाः ।
अनावृत्तिमसम्मूढाः परानन्दैकभागिनः ॥
इति ब्रह्मतर्के – भा–ता–१४–२.

105 ब्रह्मवित्पूर्णविज्ञानात् लोकानां कर्तृवेदनात् ।
लोकविद्देवविद्यासौ देवानां देववेदनात् ॥
वेदार्थवेदनाच्चैव वेदवित्भूतवित्तथा ।
तन्नियन्तृपरिज्ञानादात्मविद्यातवेदनात् ॥
सर्ववित्सर्वसारज्ञो यो वेद पुरुषोत्तमम् ।
देशाधिष्ठातृ विज्ञानाद्दोषज्ञ इति चोच्यते ॥
यथा तद्वद्धरेर्ज्ञानात्सर्वज्ञ इति वैदिकम् ॥
इति ब्रह्मतर्के–बृ–भा–३९–१०.

106 विशेषज्ञानसम्प्राप्त्यै जानन्तोऽपि परं हरिम् ।
ब्रूयुर्देवाश्च ऋषयः तदन्यस्य परात्मताम् ॥
इति ब्रह्मतर्के– छां–भा–५–९.

**अष्टमे भागे मोक्षतत्साधने विषयः ।**

१) तत्र पुनः ज्ञानाधिक्यात्सुखाधिक्यनिरूपणम् ।
२) मुक्तेषु सर्वस्वरूपत्वशब्दस्य योग्यार्थकथनम् ।
३) मुक्तानामपि बाह्यकामनाऽभावेऽपि स्वरूपकामनासत्त्वकथनम् ।
४) मोक्षस्य ज्ञेययुतत्वसमर्थनम् ।
५) योग्योपासनया मुक्तिकथनम् ।
६) हृदिस्थप्रतिबिम्बोपासनस्यापि फलदत्वकथनम् ।

७) सकलशास्त्रदर्शनपूर्वकं विष्णुज्ञानावश्यकत्वसमर्थनम् ।
८) गुंणोपसंहारावश्यकत्वसमर्थनम् ।
९) मुक्तानामप्युपासनासत्त्वकथनम् ।
१०) सर्वसाधारणोपासनास्वरूपकथनम् ।
११) गुणोपसंहारावश्यकत्वसमर्थनम् ।
१२) ब्रह्मदर्शनार्थं श्रवणादेरावश्यकत्वसमर्थनम् ।
१३) समत्वादिना अङ्गदेवतोपासनानिरासः ।
१४) उपासनाविशेषकथनम् ।
१५) योग्यताभेदेन शब्दानां नानार्थत्वदर्शनकथनम् ।
१६) योग्योपासनायाः मुक्त्यर्थमवश्यकर्तव्यत्वसमर्थनम् ।
१७) अध्ययनवत एवाधिकारप्रदर्शनम् ।
१८) ज्ञानान्मोक्षनिश्चयेपि शुभकर्मादिभिराधिक्यविपर्ययकथनम् ।
१९) विष्णूपासनायाः ब्रह्मत्वपूर्वकं करणसमर्थनम् ।
२०) ज्ञानिनां कर्मिणां च विभिन्नमार्गप्रदर्शनम् ।
२१) भक्तिज्ञानपरिपाकात्पूर्वमपि मुक्तिकथनम् ।
२२) हरिगुर्वोः प्रसादावश्यकत्वकथनम् ।
२३) जडाहङ्काराभावेन मुक्तस्य तत्कार्यभ्रमाभावकथनम् ।
२४) धर्मादीनामुपासनाङ्गत्वाभावसमर्थनम् ।

एवं बृहदारण्यके पञ्चसु, सूत्रभाष्ये पञ्चदशसु, भागवततात्पर्ये त्रिषु स्थलेषु न्यायविवरणे एकवारं आहत्य चतुर्षु ग्रन्थेषु चतुर्विंशतिवारं प्रकटीकृतः ॥

107 स्वयोग्यभगवद्दृष्टेः सर्वैर्मुक्तिरवाप्यते ।
पुनर्ज्ञानान्तराधिक्यात्सुखाधिक्यं विमोक्षगम् ॥
इति ब्रह्मतर्के— बृ—भा—५०—१५.

108 स्वयोग्यपूर्तेः स्वातन्त्र्याद्ब्राह्मो देवगणस्य च ।
सर्वभावस्तथा मोक्षे न तु सर्वस्वरूपतः ॥
इति ब्रह्मतर्के—बृ—भा—५१—८.



109 यावद्विमुच्येत्पुरुषः तावत्कामाः हृदि स्थिताः ।
चित्ताभावाद्विमुक्तस्य स्युः कामास्तद्गताः कुतः ॥
स्वरूपभूतचित्तेन कामाद्याः स्युः सुखात्मकाः ।
दुःखात्मकाः प्राकृतावा मुक्तानां न कथञ्चन ॥
इति ब्रह्मतर्के— बृ—भा—५८—१८.

110 विष्णोर्ज्ञानादिकं मोक्षः तदभावे कुतः सुखम् ।
ज्ञेयाभावान्नहि ज्ञानं ज्ञानाभावे हि शून्यता ।
तस्मात्ज्ञेययुतो मोक्षः सुखरूपत्वतः सदा ॥
इति ब्रह्मतर्के—बृ—भा—६०—२१.

111 अक्लेशितोऽपि क्लेशादीनतीतैष्यानपीह यः ।
विष्णवे तपइत्येव प्रार्थयेत्स परं व्रजेत् ॥
विष्णोः स्वरूपवेत्ताचेदन्यथा न कथञ्चन ।
यथा स्वरूपवेत्तुःस्यादेकैकापि ह्युपासना ॥
मोक्षाय सहिताः सर्वाः अप्यज्ञस्य न तु काचित् ।
यथावत्केशवं ज्ञात्वा स्वयोग्यैकामुपासनाम् ।
अपि कृत्वा हरिं दृष्ट्वा मुच्यते नात्र संशयः ॥
इति ब्रह्मतर्के — बृ—भा—६३—४.

112 पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।
ब्रह्मैव प्रतिबिम्बे 'यदतस्तेषां फलप्रदम् ॥
तदुपासनं च भवति प्रतिमोपासनं यथा ।
दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम् ॥
उपासना त्वापरोक्ष्यं गमयेत्तत्प्रसादतः ॥
इति च ब्रह्मतर्के—सू—भा—५१—१५.

113 सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान् ।
सपञ्चरात्रान्विज्ञाय विष्णुर्ज्ञेयो न चान्यथा ॥
इति च ब्रह्मतर्के—सू—भा—५२—१७. —तत्वदी—१६.

114 नामत्वात्सर्वविद्यानां गुणानामुपसंहृतिः ।
कार्यैव ब्रह्मणि परे नात्र कार्या विचारणा ॥
इति च ब्रह्मतर्के—सू—भा—५३—६.

115 ब्रह्मतर्के च—
मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः ।

नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते ॥
इति—सू—भा—५४—२०

116 सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।
सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता ॥
इति ब्रह्मतर्के — सू—भा—५३—१३.

117 सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः ।
तत्रापि नैव सर्वेऽपि तस्मात्कार्योपसंहृतिः ॥
इति ब्रह्मतर्के— सू—भा—५४—१५.

118 ब्रह्मतर्के च—
श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥
इति—सू—भा—५६—१९.

119 समत्वाद्वोत्तमत्वाद्वा नाङ्गदेवाद्युपासनम् ।
उपसंहार्यमित्याहुर्वेदसिद्धान्तवेदिनः ॥
इति ब्रह्मतर्कवचनात्—सू—भा—५८—१६.

120 देवादीनामुपास्यास्तु भूतिव्याप्त्यादयो गुणाः ।
आनन्दाद्यास्तु, सर्वेषामन्यथाऽनर्थकृद्भवेत् ॥
इति ब्रह्मतर्के—सू—भा—५४—१२.

121 शब्दोऽनुमा तथैवाक्षो योग्यताभेदतः सदा ।
ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥
अतःपूर्णत्वमीशस्य नानैवेषां प्रदृश्यते ।
अतःफलस्य नानात्वं नानैवोपासना यतः ॥
इति हि ब्रह्मतर्के—सू—भा—५८—२२.

122 मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम् ।
नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये ।
उपास्यते यथा योगं न वा फलविभेदतः ॥
इति च ब्रह्मतर्के—सू—भा—पु—५९—४.

123 अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।
गुरुभक्तिविहीनस्य शमादिरहितस्य च ॥
न च वर्णावरस्यापि तस्मादध्ययनान्वितः ।



ब्रह्मज्ञाने तु वेदोक्तेऽप्यधिकारी सतां मतः ॥
इति हि ब्रह्मतर्के— सू—भा—६०—१७.

124 ब्रह्मतर्के च—
येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।
शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ॥
स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणः प्रायशस्तथा ।
देवानामपि सर्वेषां विशेषादुत्तरोत्तरम् ॥
सू—भा—६२—१.

125 ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् ।
महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि ॥
सर्वतः प्रीतिजनकमतः तत्सर्वथा भवेत् ।
आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता ॥
कार्यैव सर्वथा विष्णोः ब्रह्मत्वं न परित्यजेत् ॥
इति च ब्रह्मतर्के—सू—भा—६६—१४.

126 द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् ।
धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात् ॥
अग्निर्ज्योतिरिति द्वैधवार्चिषः सम्प्रतिष्ठितिः ।
अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् ॥ इति ॥
एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान् ॥
इति च ब्रह्मतर्के— सू—भा—७१—६.

127 भक्तिज्ञानपरीपाकात् किञ्चित्पूर्वं च मुच्यते ।
दर्शनेन हरेस्तत्र नानन्दः पूर्णतां व्रजेत् ॥
इति ब्रह्मतर्के— भा—ता—३५—९.

128 पश्यमानोऽपि तु हरिं न तु वेत्ति कथंचन ।
वेत्ति किञ्चित्प्रसादेन हरेरथ गुरोस्तथा ॥
इति ब्रह्मतर्के— भा—ता—४७—१.

129 अहङ्कारे विद्यमाने भ्रमो भवति नान्यदा ।
सम्यग्ज्ञानं हरेः शक्त्या तन्मुक्तस्य विशेषतः ॥
देवतानुग्रहो नित्यो मुक्तस्यापि ह्यपेक्षते ।
नित्यं तत्प्रतिबिम्बत्वाज्जीवानामेव कृत्स्नशः ॥
बाह्यज्ञानं च मुक्तस्य न जडाहंकृतेः कचित् ।

किन्तु स्वरूपशक्त्यैव देवेभ्यश्चाभिजायते ॥
इति ब्रह्मतर्के–भा–ता–१२८–४.

130 अर्थादिधर्मसिद्धौ हि न नियत्यांगमिष्यते ।
इति ब्रह्मतर्के–न्या–वि–१४–५.

नवमे भागे उक्तादन्ये अनेके विषयाः प्रासंगिकाः ।

१) प्रासङ्गिकयदृच्छाशब्दार्थकथनम् ।
२) महरादिशब्दार्थकथनम् ।
३) शक्तिशब्दस्यानेकार्थत्वकथनम् ।
४) मुख्यामुख्यवाच्यार्थस्वरूपकथनम् ।
५) सिंहावलोकनशब्दार्थनिरूपणम् ।
६) लये विद्यमानार्थकथनम् ।
७) कार्यकारणयोः पूर्वोत्तरासत्त्वेपि कारणाभेदकथनम् ।
८) तत्तत्कालासत्त्वेपि लयचिन्तनमेव आहुत्यादिशब्दार्थः ।
९) भूम्यादीनामङ्गत्वनिरूपणम् ।
१०) भिन्नयोरप्यभेदकथनस्य गतिनिरूपणम् ।
११) तन्त्रशब्दार्थकथनम् ।
१२) गुणानां लयविशेषकथनम् ।
१३) कालविशेषस्वरूपकथनम् ।
१४) अण्डबहुत्वसमर्थनम् ।
१५) मिथ्यात्वानुमानस्य दुष्टत्वनिरूपणम् ।
१६) गुणानां गुण्यभेदेऽपि व्यवहारभेदसमर्थनम् ।
१७) प्रमाणानां तदर्थत्वपरत्वे नियामककथनम् ।
१८) तदादिशब्दानां सादृश्यार्थकत्वे प्रमाणकथनम् ।
१९) स्वशक्तीनामिति मूलस्थशक्तिपदस्य विवक्षितार्थकथनम् ।
२०) प्रमाणविरोधे शब्दानां विभक्तीनां चार्थव्यत्यासकथनम् ।
२१) उत्तमत्वस्य द्विविधार्थकथनम् ।



नवमे भागे भागवततात्पर्ये सप्तदशसु बृहदारण्यक, विष्णुतत्व-निर्णय, गीतातात्पर्यनिर्णय अनुव्याख्यानेषु एकैकवारं आहृत्य पञ्चसु ग्रन्थेषु एकविंशतिवारं प्रकटीकृतः ॥

131 यत्रान्यहेतुभावःस्यादीश्वरेच्छादिना विना ।
तदिच्छा हि यदृच्छा स्यादतस्तत्र यदृच्छया ॥
इति ब्रह्मतर्के–भा–ता–१५–१३.

132 स्वतो महत्वं तु महो विशेषप्रातिशक्तिता ।
विभूतिर्लक्षणोत्साहो लक्ष्मीशब्देन भण्यते ॥
इति ब्रह्मतर्के– भा–ता–१८–५.

133 शक्यत्वाच्छक्तयो भार्याः शक्तिः सामर्थ्यमुच्यते ॥
इति ब्रह्मतर्के– भा–ता–२४–६.

134 मुख्याभिधेयस्त्वर्थः स्यात् वाच्यमन्यच्च भण्यते ।
अमुख्येष्वार्थशब्दस्तु नीचोपरि हितो भवेत् ॥
इति ब्रह्मतर्के– भा–ता–३१–७.

135 यत्र पश्चात्तनः श्रेष्ठस्तत्र सिंहावलोकनम् ।
इति ब्रह्मतर्के– भा–ता–३४–९.

136 सर्वसंहारकं विष्णुं देवीं जीवान् तथैव च ।
कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् ॥
संस्कारश्चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत् ॥
इति ब्रह्मतर्के–बृ–भा–२–८.–तत्व, दी पु–२२७.

137 आद्यन्तयोः सर्वकार्यमसदेवेति निश्चितम् ।
यद्यसन्न विशेषोऽत्र जायते कोऽत्र जायते ॥
व्यक्तावपि समं ह्येतदनवस्थाऽन्यथा भवेत् ।
एवं नाशेऽपि बोद्धव्यमतोऽसन्नेव जायते ॥
तथाप्यभेदानुभवात्कार्यकारणयोः सदा ।
भेदस्य चाविशेषेण देहोऽगात्क्षितितामिति ॥
व्यवहारो भवेद्यस्माद्बल्येवानुभवः सदा ॥
इति च ब्रह्मतर्के– गी–ता–४–९.

138 अस्यास्मिन् विलयो भवतीत्येवं विज्ञानमाहुतिः ।
न तु तत्कालविलयस्त्वन्यो वा तस्य दर्शनात् ॥
इति ब्रह्मतर्के– भा–ता–१०–२१.

139 प्रतिमापेक्षयाऽङ्गानि भूरादीनि स्वरूपतः ।
तदाश्रितानि तज्ज्ञानि बह्वङ्गत्वं बहुत्वतः ॥
इति ब्रह्मतर्के — भा–ता–१२–९.

140 सर्वं पुरुष एवेति भण्यते भेदवज्जगत् ।
तदधीनं तु सत्तादि यतो ह्यस्य सदा भवेत् ॥
इति ब्रह्मतर्के — भा–ता–१७–८.

141 तनुते येन कार्यं यत् तन्त्रं साधनमुच्यते ।
कारणानां स्वशक्तिर्वा प्रधानं साधनं यतः ॥
इति ब्रह्मतर्के — भा–ता–२५–४.

142 तामसस्य पदार्थस्य सत्त्वं हि लयकारणम् ।
सात्त्विकस्य तमश्चैव तयोरपि रजः क्वचित् ॥
गुणतोऽयं लयः प्रोक्तो द्रव्यतस्तु विरोधिना ।
कालतः कालसंख्याको लयः सर्वस्य वस्तुनः ॥
इति ब्रह्मतर्के — भा–ता–२८–१०.

143 यावन्तं देवलोकस्थो मानुषस्त्ववधारयेत् ।
महाप्राज्ञो देवजूकः स कालः परमाणुकः ॥
सर्गाद्यैरनवच्छिन्नः तदनन्तर इत्यपि ।
तथैव परमाण्वादि विशेषात्माऽपि नो भवेत् ॥
पूर्वापरादिभेदो न स कालः परमो महानिति ॥
इति ब्रह्मतर्के—भा–ता–३२–१२.

144 शरीराणां बहुत्वेन अतीतानागतैस्तथा ।
अस्त्येव देवकायेषु प्रतिप्रति च दर्शनात् ॥
विष्णुसामर्थ्यतोऽण्डानां बहुत्वं नान्यथा भवेत् ।
इति ब्रह्मतर्के—भा–ता–३३–१७.

145 ईशोऽनीशो जगन्मिथ्या दुःखी मुक्तौ भिदा न हि ।
इति प्रतिज्ञाव्याघातः सर्वदोषाधिकाधिकः ॥
इति हि ब्रह्मतर्कोक्तिः— अनु पु–४३–११.

146 अभिन्नत्वमभेदश्च यथा भेदविवर्जितम् ।
व्यवहार्यं पृथक्त्वं स्यादेवमेव गुणा हरेः ॥
अभेदाभिन्नयोर्भेदो यदि वा भेदभिन्नयोः ।
अनवस्थितिरेव स्यान्न विशेषणतामतिः ॥



मूलसंबन्धमज्ञात्वा तस्मादेकमनन्तधा ।
व्यवहार्यं विशेषेण दुस्तर्कबलतो हरेः ॥
विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य च ॥
इति हि ब्रह्मतर्के–वि–त–नि–१८–१७. तत्व दी, १०-११

द्विरुक्तेः मुख्यतात्पर्यविषयत्वम् ।

147 यत्राधिकं तत्परता बहुवारमपि ध्रुवम् ।
तद्वदन्ति महाप्राज्ञाः लोकवेदानुसारतः ॥
इति ब्रह्मतर्के—भा–ता–९–४.

148 सदृशे वा प्रधाने वा कारणे वा तदित्ययम् ।
शब्दः सङ्गटते भेदे विद्यमानेऽपि तत्वतः ॥
इति ब्रह्मतर्के—भा–ता–१०–५.

149 शक्यत्वाच्छक्तयो विष्णोर्महदाद्या रमा तथा ।
स्वरूपशक्तिः शक्तित्वान्मुख्यशक्तिर्हि सा यतः ॥
इति ब्रह्मतर्के— भा–ता–२४–१४.

150 बहुमग्नविरोधे तु व्यत्यासः शब्दतोऽर्थतः ।
कार्योऽनिरुक्तदेवानां गुणसिद्ध्यै न चान्यथा ॥
विष्णुर्ब्रह्म तथा वायुरनिरुक्ताः प्रकीर्तिताः ॥
तत्पलयश्चेतरगुणा व्यत्ययस्यास्तेष्वसंशयः ॥
इति ब्रह्मतर्के—भा–ता–७८–१९.

151 इन्द्राद्युत्तमताऽन्येषां समता वा स्वके कुले ।
उत्तमत्वमुपास्त्यादि योग्यता वा निगद्यते ॥
इति ब्रह्मतर्के— भा–ता–१०–१५.

अत्र पृथक् कृतेषु भागेषु प्रथम, द्वितीय, तृतीय, चतुर्थ, सप्तम, अष्टम, नवम भागीयाः केचन विषयाः तत्वप्रदीपिकायां श्रीमत्त्रिविक्रमपण्डिताचार्यविरचितायामेकादशस्थलेषु निरूपिताः । तत्र तृतीयभागविषये श्रीमत्त्रिविक्रमपण्डिताचार्यैरुदाहृतः एकः ब्रह्मतर्काख्यः ग्रन्थः आचार्यमूलग्रन्थेषूदाहृतब्रह्मतर्कप्रमाणेषु मध्ये क्वापि नास्माभिर्दृष्टः इयत्पर्यन्तं । यदि कैश्चिन्महद्भिः स भागः आचार्यमूलकोशेषु दृष्टः स्यात् अवश्यं तदा वयं बोधनीया इति विदुषः प्रार्थयामः ।

यदि च स ग्रन्थभागः श्रीमदाचार्यमूलकोशेषु अघटित एव स्यात्तर्हि महदिदं प्रमोदस्थानं । सर्वज्ञकल्पेभ्यः श्रीमदाचार्येभ्यः इतरेऽपि ब्रह्मतर्कग्रन्थद्रष्टारः संतीति साधयितुमुद्युक्तानामस्माकमत्यनुकूलत्वात् । यतो हि अस्मदुक्तरीत्या आचार्यकाले विद्यमानस्य तत्प्रमाणस्य त्रिविक्रमपण्डितार्यैर्दृष्टत्वादेव स्वानुकूलतया स भागः स्वकृते ग्रन्थे निवेशित इति इतरैरपि स ग्रन्थः दृष्ट इति निश्शङ्कं वक्तुं शक्नुमो वयं । न केवलमेतावत् । स ग्रन्थ एव नास्तीति विचाराचतुरया मन्दया धिया विवदमानानां अल्पानां पुरुषाणां वाग्बन्धायाप्यभूदिति मोमुदीति नश्चेतः॥

इदमेकमनुक्त्वा च स्थातुं नोत्सहे । यत्पूर्वोक्तौ ब्रह्मतर्कप्रमाणघटिततया प्रदर्शिताचार्यग्रन्थान् विना तर्कताण्डवादिग्रन्थेष्वपि कचिद्दृष्टोऽपि ब्रह्मतर्काख्यो ग्रन्थभागः प्रदर्शितभागांतर्गत एवेति न पृथक् प्रदर्शितः इति सुधीभिर्विभावनीयम् ॥

कृष्णायेन्दीवरश्यामस्मितसुन्दरवर्ष्मणे ।
हृद्यानवद्यविद्याय मध्वाय च नमोनमः ॥
क्वादृष्ट ब्रह्मतर्काख्यग्रन्थः सर्वज्ञदर्शितः ।
क्वाहं स्खलन्मतिर्दृष्टग्रन्थेष्वपि तथापि तु
वादिराजगुरूत्तंसभवद्दत्तधिया मया ।
नारायणेन विदुषा भवत्पादसमर्पिता ।
आचार्योदाहृतब्रह्मतर्कग्रन्थसमाश्रयां ।
कृतिरेषा सदा भूयात्तोषाय सुहृदां सतां ॥

इति तर्ककेसरी, न्यायवेदान्तवाचस्पतिः महाविद्वान् इत्यादि बिरुदैर्महद्भिरादृतः

**प. नारायणाचार्यः**